॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः

# ५२

दत्तात्रयसम्प्रदायविभागे (१) प्रथम पुष्पम् ।

---

# काथबोधः

साजनीकृतटीकोपेतः ।

( दत्तात्रेय सम्प्रदायाऽनुगतः )

काव्यतीर्थ-सांख्य-योगशास्त्राचार्य्याद्युपाह्वेन
श्रीमता मुकुन्दलाल शर्मणासंशोधितः ।

# KĀTHA BODHA

( On Dattātreya System of Thought )

WITH

THE COMMENTARY OF SĀJANĪ

EDITED BY

Pandit Mukundalal S'āstrī, Kāvyatīrtha,
Sāṅkhya-Yoga S'āstrāchārya.

—:o:—

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरीज आफिस,
विलास प्रेस-गोपालमंदिर लेन,
बनारस सिटी ।
१९८३

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः

५२

दत्तात्रेयसम्प्रदायविभागे (१) प्रथम पुष्पम् ।

# काथबोधः



साजनीकृतटीकोपेतः ।

( दत्तात्रेय सम्प्रदायाऽनुगतः )

काव्यतीर्थ-सांख्य-योगशास्त्राचार्य्याद्युपाह्वेन
श्रीमता मुकुन्दलाल शर्मणासंशोधितः ।

# KĀTHA BODHA

( On Dattātreya System of Thought )

WITH

THE COMMENTARY OF SĀJANĪ

EDITED BY

Pandit Mukundalal S'āstrī, Kāvyatīrtha,
Sāṅkhya-Yoga S'āstrāchārya.

———:o:———

प्रकाशकः—

जयकृष्णदास-हरिदासगुप्तः,
चौखम्बा-संस्कृत-सीरिज-आफिस,
विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,
बनारस सिटी ।

1926.

॥ श्रीः ॥

# प्रस्तावना ।

अनादिनिधनो देवः सर्वव्यापी निरञ्जनः ।
हृदयस्थः स्वयं वक्ता कर्त्ता कारयिता हरिः ॥
यन्तु कर्म्मणि यस्मिंस्तु न्ययुङ्क्त प्रथमं प्रभुः ।
स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥

अस्ति चाऽतिगुप्तलुप्तसद्रहस्यमयप्रथितगोरक्षसम्प्रदाय इव दत्तात्रेयसम्प्रदायो लोकेऽस्मिन्, नाना देशेषु तदीयमठमन्दिरोपासकानां सद्भावात्। तत्र खलु सम्प्रदायरहस्यवेत्तुरदर्शनात्तद्रहस्यप्रख्यापकग्रन्थानां विरलप्रचारत्वाच्चाज्ञानां दग्धवदनानां हस्तन्यस्तगजमौक्तिकमालिकाया इवाऽस्य सम्प्रदायस्य दुर्गतिरुपगतेति पराऽपरविद्यानुशीलनशीलैः सर्वैरभ्युपगम्यते । गोरक्षसम्प्रदायस्य कियान् ग्रन्थो यस्य परापरविद्याविलासवशेन विद्याविलासयन्त्रालयं समाश्रित्य विहितस्वरूपस्सन् शास्त्रैषणापराणां दृष्टिविषयतां प्रपेदे, तस्यैव सर्वथा यत्नेन कुतश्चिदवधूतवर्य्यात् समासादितः लिपिकरप्रमादादसङ्गतपाठक्रमः समस्तशास्त्रप्रमाणशिखरीभूतोपनिषदुक्तषण्णवतितत्त्वसारभूतरहस्यसमष्टिमयोऽयंग्रन्थः काशीस्थराजकीयविद्यालयग्रन्थसंग्रहभवनेऽवनेः सारदाभवने संरक्षित आसीत् ।

सच्चिदानन्दविभवमयस्य भगवतोऽनन्तविग्रहेषु विशिष्टतमविग्रहेण पुराणतन्त्रादिषु समुट्टङ्कितदत्तात्रेयनामधेयेन सम्प्रदायेषु सुप्रसिद्धेन योगीश्वरेण ग्रथितः तत्त्वमयो निबन्धः श्रुतिसारनामकोऽध्यगायि, यश्चाचिरेणैव तेन काशीस्थराजकीयविद्यालयप्रधानाध्यक्षवर्य्येण महानु-

भवेन शास्त्रपारावारगामिना श्रीमता गोपीनाथकविराजेन स्वसारस्वतमन्दिरात् संशोध्य मुद्रायन्त्रनियन्त्रणेन विदुषां गोचरतामापादयिष्यते ।

श्रीमत्सन्तोषानन्दकृतस्य ग्रन्थस्याऽस्य च "काथबोध" इति पारिभाषिकसंज्ञाया जीवेशपरता तु अन्तर्यामिणा भगवता दत्तेनैवाऽकारि।

अस्य टीका तु सुविस्तारगम्भीरार्थपरापरविद्याविलासवत्या सन्तोषानन्दशिष्यया सुविदुष्या साजन्याख्यया वितेने, तत्रैव तया चान्ते प्रतिश्लोकसारान् संक्षेपेणैव विधाय मन्त्रात्मकतया चाऽस्येतिकर्त्तव्यता विहिता।

निगमाऽगमवर्त्मानुवर्त्तमानानां न्यायवैशेषिकसांख्यपातञ्जलपूर्वोत्तरमीमांसादीनामतिप्रख्यातानां दर्शनेतिहासादीनामन्तरयमपि तत्त्वमन्त्रमयो ग्रन्थः स्वमहिम्नैव चतुष्कोटिविनिर्मुक्तान्तस्तत्त्वरहस्यकीर्त्तनेन स्वपदमलङ्करिष्यते । अतिकलुषे तमोबहुले कलौ त्रिविधदुःखैः परितप्यमानानां संसारदावदाहदंदह्यमानानां जीवानां निरुपायतामवलोक्य परमकारुणिकेन भगवता षड्विंशश्लोकैर्न्यस्तसमस्ततत्त्वरूपैः षण्णवतितत्त्वानां युगोचितोपायोपेयात्मकं सारमाकलय्य कलेरुचितविधिविहितयमनियमासनानुष्ठानपुरःसरप्राणानामायामसन्धिसन्धानाऽभिसन्धीयमानसार्थनामजपसरणिरभिहिता,—यथा हि,

विष्णुपुराणे—

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

अत्रैव वैशिष्ट्यमावहन्-क्षुद्रतमोऽपि चाऽयं ग्रन्थः संक्षेपेणैव निबद्धतया हि क्षौद्रमिव मधुव्रतानां तत्त्वरसिकानामाकूतिं सङ्केतयन् नितरां परतोषं विधास्यतीत्याशासे । इति शम् ॥

इति विज्ञापक—

**श्रीमुकुन्दलाल शर्म्मा ।**

श्रीगणेशाय नमः ॥

# काथबोधः ।

अधिदैवाधिभूताय आत्मने सर्वमूर्त्तये ।
सर्व्वातीतप्रकाशाय चिन्मात्राकाय ते नमः ॥ १ ॥
भर्गध्यानेन भर्गोऽस्मि सर्वपापातिगोह्यहम् ।
विवृणोमि गुरून्नत्वा सन्तोषानन्दवाग्भवम् ॥२ ॥
सखा कश्चन सन्तोषं काथं वेत्सीति चाब्रवीत् ।
हासार्थं तेन खेदेन प्रपन्नशरणं गुरुम् ॥ ३ ॥

सन्तोष उवाच—

काथं वेत्सीति मामाह मतितां(?)वद मेऽच्युत ।
त्रिमूर्त्तिस्तमुवाचेदं काथं वेत्तासि नान्यथा ॥ ४ ॥
तन्मुखाच्छ्लोकषड्विंशैः तं च बोधितवान्प्रभुः ।
तं च खेदान्मोचयित्वा विद्यया काथसंज्ञया ॥५॥
क्रोधघ्ना काथविद्येयं गीतान्तर्यामिणात्मना ।
दत्तात्रेयेण तद्वक्त्रादतो व्याक्रियते मया ॥ ६ ॥
गङ्गयाऽन्योदकमिव पवित्रीक्रियते हि वाक् ।
तयोक्तशब्दरत्नौघैः प्रीयन्तां सर्वचक्षुषः ॥ ७ ॥

केयं काथविद्येति चेदाह-कैधातोः कायतीति कास्तदन्वयार्थ ईश्वरो वेदजनकत्वात् । व्यथधातोः व्यथतीति थस्त्वंपदार्थ उभयशबलितप्रातिभासिकख्यातित्वाज्जीवः । काथयोरीशजीवयोः स्वरूपं बुध्यते यत्रासौ काथबोधः, तद्वेदनाद्विद्या वा । अत एव स्वरूपग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । किं प्रयोजनमिति चेदाह-तच्छ्रवणमनननिदिध्यासनजन्यतत्त्वज्ञानेन कैवल्यादानन्दावाप्तिः प्रयोजनम् । तत्र शमादिसाधनचतुष्टयेन पूर्वपूर्वपुण्येन च शुद्धचित्तस्तज्जिज्ञासुरधिकारी । काथबोधं वक्ष्यामीति प्रतिज्ञाय परमकारुणिको भगवान् शिष्यार्थं तस्यैव स्तुत्या प्रथमश्लोकद्वयेन वस्तुनिर्देशात्मकं मङ्गलमाचरति-वागर्थात्मेति ।

वागर्थात्मा सर्वभूतान्तरात्मा
वक्ता श्रोता विश्वरूपश्चिदात्मा ।
सर्वावासश्चैको नित्योपलब्धि-
र्यः सन्तोषानन्ददस्तं भजेऽहम् ॥ १ ॥

अहं तं भजे, अहं शरीरद्वयविलक्षणः शुद्धस्त्वंपदार्थः भजनकर्त्ता । कृतिरहितोऽपि कर्त्तेत्युपलक्षणं त्वंपदलक्ष्यत्वात् । तं शुद्धतत्पदार्थममायिनं परमात्मानं भजनीयं भजे । भजनं किमिति चेदाह, तादात्म्यज्ञानं तेनेत्यर्थः । ननु ज्ञानमिदं भजनं कथमिति चेदाह, सप्रेमज्ञानं ज्ञानसाध्यत्वाद्भजनमिति भगवन्मतम् । "सर्वं खल्विदं ब्रह्म" "तज्जलानिति शान्त उपासीते" ति श्रुतेः । अस्यार्थः–हे मुमुक्षो ! युष्मत्प्रत्ययवाच्यमिदं सर्वं वाचारम्भणविकारमात्रत्वाद्ब्रह्मैव, कस्मात्समुद्रवीचीन्यायेन 'तज्जलान्' तस्मिन्जायत इति तज्जं लीयत इति लं अन्वितमिति अन् इति ज्ञानेनाद्वितीयत्वेन शान्त उप समीपे तद्रूपत्वेन आ-

सीतेत्यर्थः। ननु "यजमानः प्रस्तरः""आदित्यो यूप" इति वदस्तु, इति न,खल्विति निश्चयेनेत्युक्तेः। "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति भगवदुक्तेः 'अहं स चे' त्यभेदभजनस्योक्तत्वाच्च,"ज्ञानी त्वात्मैव मे मत"मित्युक्तेश्च। किंलक्षणस्तत्पदार्थः-शवलः शुद्धश्च। तत्र तावत् स्तुत्या सप्तपदैर्लक्षणमाह "जन्माद्यस्य यतः"। वागर्थात्मकस्यास्य जन्मास्थितिलयाः यतः स वागर्थात्मा त्रिस्थलात्मा। प्ररा पश्यन्ती मध्यमा वैखरीति भेदात्मिका ध्वनिनादवर्णोच्चारणहेत्वात्मिका सर्वाभिधानलक्षणा वाक्। तत्प्रतिपाद्यसर्वाभिधेयात्मको ह्यर्थः। वाक् चअर्थश्च वागर्थौ, ब्रह्मविवर्त्तावध्यस्तौ, तयोः सातत्येनाततीत्यात्मा। यथा सूर्यतेजसोष्मा जलस्य, तत्त्वेनात्माधिष्ठानत्वात्। तस्मात् स एव वागर्थात्मकानां सर्वभूतानामन्तरात्मा। पृथिव्यादिमहाभूतानि च तद्विकृतयश्चतुर्विधभूतग्रामास्तेषां सर्वेषां भूतानामन्तरात्मत्वात्, तत्रस्थः वक्ता चतुर्विधवाक्प्रेरकः "येन वाचं व्याकरोती"ति श्रुतेः। असम्यग्वक्तृत्वाज्जीवो न श्रोता, "नान्योऽतोऽस्ति श्रोते"ति बृहदारण्यकश्रुत्युक्तत्वात्स एव श्रोता "सर्वतः श्रुतिमल्लोके"इति भगवदुक्तेश्च। अत एव विश्वरूपः,विश्वास्मिन् रूपं यस्यासौ,अस्तिभातिप्रियत्वात्,"यस्य भासा सर्वमिदं विभाती"ति श्रुतेश्च। अस्य सर्वस्यावासः क इति चेत्? सर्वावासः युष्मत्प्रत्ययवाच्यस्य सर्वस्य बाह्याभ्यन्तरावासः आश्रय इत्यर्थः। एवं तटस्थलक्षणं मायाशवलितमीश्वरं स्तुत्वा अतस्तन्निरसनेन स्वरूपलक्षणमात्मानमीश्वरं स्तौति। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति छान्दोग्ये। तथा चिदेव सत्यमिति चिदात्मा चित्स्वरूपः कार्यकारणस्वरूपः जडधर्मात्यन्ताभावात्। अजा इतिबृहदारण्योक्तोक्तत्वात्। ननु जडाभावाश्रयत्वाज्जडाभाववदिति सध-

र्मकं स्यान्न त्वेकं,धर्मधर्मिभावसम्बन्धशून्यत्वात्,न त्वभावो गुणवान् असंख्यस्यैक इति द्वितीयगुणद्रव्यव्यावृत्त्या शब्दप्रवृत्तिः, न तु शक्तिग्रहेण। "नायमात्मा प्रवचनेन लभ्य" इतिश्रुतेः। निर्धर्मकं चेत् शून्यं स्यात्, "सत्यं ज्ञानमनन्तं ब्रह्मे" तिश्रुतेः। सति बोधे शून्याप्रतीतेः। अनित्यं शून्यं, तन्न, अतएवोपलब्धिः। "यत्साक्षादपरोक्षादि" तिश्रुतेः। सर्वकाले कालातीते चोप समीपे लब्धिर्न तूभयस्याप्रमेयस्याऽसौ, अन्येषां देशकालौ व्यावृतत्वात्तथा न, एवं यः परमात्मा सन्तोषानन्दः सम्यक्तोषः, दुःखाज्ञानप्रतियोग्यानन्दमात्रज्ञानवृत्तिकस्तस्य तद्वृत्तित्यागेना ऽनन्दमात्मानं ददात्यसौ। तं परमेश्वरं भजे। "वासुदेवः सर्वमिति" भगवदुक्तनिदिध्यासनसाक्षात्कारवृत्त्याऽभेदभजनेन भजनकृतित्यागात्मकेन, न तु भक्तभजनभजनीयवृत्तिभेदेन उदरमन्तरं कुरुते, "अथ तस्य भयंभवती"-तिश्रुतिविरोधात् ॥ १ ॥

नत्वेति—

नत्वा हंसं सद्गुरुं तं परेशं
शुद्धं व्यक्तं भार्गवारण्यवासम् ।
ईशादीनामष्टकं पूर्वजानां
वक्ष्याम्येनं सत्त्वदं काथबोधम् ॥ २ ॥

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरा'विति श्रुतेश्च पूर्वश्लोकोक्तमेव सद्गुरुत्वेनाऽस्मिन् श्लोके स्तौति। हंसम् आत्यन्तिकप्रलयकर्तृत्वादज्ञानहननात्-हः, तं ज्ञानं तत् , सः सदात्मा गुरुः स्वभक्ताय ददातीति हंस इत्याध्याहारेण बोध्यम्। तम् ,आत्मानात्मविभागे यथा क्षीरनीरविभागे हंस इव हंसस्तं सद्गुरुं सन्मात्रं ब्रह्म तद्विषये गुम् अज्ञानावरणं, सांख्ये तत्त्वानां गतिः प्रधानमित्युक्तं, गम्लृगताविति धात्वर्थात्। तद्गुं रुणद्धीत्यसौ सद्गुरुः।

'गुकारस्त्वन्धकारः स्याद्रुकारस्तन्निरोधकः । अन्धकारनिरोधत्वाद्गुरुरित्यभिधीयते' इतिस्कान्दे । परेशं पराया उत्कृष्टविद्यायाः ईशस्तं अध्यात्मविद्यानिधानमिति भगवदुक्तोत्कृष्टत्वात् । पूर्वोक्तं शुद्धं शबलत्वशून्यं, तदेव गुरुरूपेण व्यक्तम् अनुग्रहार्थं व्यक्तामिव व्यक्तम् ईशदत्तादिव्यक्तित्वात् । भार्गवारण्यवासं "भृगुर्वै वारुणिः" "वरुणं पितरमुपससारे"ति । भृगोरिदं भार्गवं तदरण्यं तस्मिन्नुपदेष्टृत्वेन वासो यस्य तम् । तस्यैवाष्टमूर्त्तित्वात्, इनेन्द्वात्मखमरुत्तेजस्कंवह्निरात्मेशसदछेद्यभैक्ष्यभुक्कन्दसहजज्वालामुखेशहरिपादेति, सूर्याद्यन्तरात्मत्वेनाष्टमूर्त्तिधर ईशः । दत्तात्रेयस्य मूर्त्त्यष्टकं तेन सह ईशादीनाम् ईशः दत्तः आदिर्येषां तेषां पूर्वजानाम् , 'यतो वा इमानि भूतानि जायन्ते' इतिश्रुतेः "अहमादिश्चेति"भगवदुक्तेः पूर्वस्मिन् जाताः, पूर्वस्मिन् भूतादिब्रह्मणि जातबोधत्वात् पूर्वजास्तेषामीशादिति हरिपादानन्दात्मनां गुरूणामष्टकं नत्वा । एतमुल्लिखितं सत्त्वदं सत्त्वम्, आत्मज्ञानवृत्तित्वं यो ददाति तं काथबोधं वक्ष्यामीत्यन्वयः । सहस्रनाम्नि प्रसिद्धं, नामक इति नाम, य इति प्रातिभासिकत्वं प्रकृतेः प्रकृतित्वं अनिर्वाच्यायाः, सा सत्ता जीव इति भयलक्षणा । "जीवभूता महाबाहो ययेदं धार्यते जगदि"ति भगवदुक्तेः "द्वितीयाद्वै भयं भवती"ति श्रुतेश्च । कथयोः कथनं कथा कथायास्तात्पर्यभूतोऽर्थः काथः, तस्य बोधस्तं वक्ष्यामि, इति वेदादिसर्वकथासंपरंपरायास्तत्तात्पर्यत्वात् "सर्वे वेदा यत्पदमामनन्ती"तिश्रुतेश्च । इति स्तुत्वा प्रश्नहेतुं व्याकरोति ॥ २ ॥

कश्चिच्छिष्यः सङ्गदोषैर्विमूढः
क्रोधेनाऽसौ तप्तरूपो बभूव ।
ऐशात्मा अनीशवत्सोऽपि जातः
स्वात्मत्यागाच्चैत्यसङ्गोन्मुखत्वात् ॥ ३ ॥

कश्चिदिति। सद्गुरोः कश्चिच्छिष्यः, गुरूपदेशोत्पन्नज्ञानोऽपि पुत्रशोकेन वसिष्ठ इव सङ्गदोषैः मानैश्वर्यादि समीचीनमिति वासनात्मकसङ्गस्तज्जन्या दोषाः कामादयस्तैः विमूढः विशिष्टज्ञानोऽपि मूढ इव मूढः, गुरुसेवाऽकरणाच्च। श्रुतिश्च "ते चैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"। नान्यस्येति। व्यादत्ता सख्युक्तभग्न(?)कामक्रोधजाता येन। तप्तरूपः तप्तलोहघटवद्बाह्याभ्यन्तरो बभूवेत्यर्थः। तन्महत्त्वमाह, ऐशात्मा-ईशः भूतसृष्टिस्थितिलयकृतिविशिष्टः शिवदत्तात्रेयादिकृतविग्रहः तस्य शिष्या ऐशास्तेषां तत्त्वबोध शिष्यत्वत्यागेन यस्मिन्नततीत्यात्मासौ तेन गतजनित्वादजोऽपि अनीशवत् परतन्त्रवत् भर्त्रालिङ्गनया स्वप्नवैधव्यानुभववज्जात इत्यर्थः। कस्मादिति चेत् स्वात्मत्यागात् स्वसम्बन्धिरजस्तमसोरत्यन्ताभावसत्त्ववृत्तिकब्रह्मैवाहमित्यनुभवात्मनः अनादरस्त्यागः तस्मात्। अन्यच्च चैत्यसङ्गोन्मुखत्वात्, पुरुषचित्तकल्पितभ्रूशब्दं प्रधानं तस्मिन् तत्त्वानामूर्ध्वत्वावलोकनेनोन्मुखत्वं तस्मात्॥३॥

शिष्य उवाच।

बद्ध्वा पाणी तप्तकायो बभाषे
काथावस्थां विश्वविश्वान्तकाले।
क्रोधघ्नाऽस्याः काथविद्या परान्या
शान्तिः काथेत्यादिसर्वं वदस्व ॥ ४ ॥

अथ शिष्यः गुरुं प्रश्नत्रयं पृच्छति। बद्ध्वा पाणी, पूर्वोक्तहेतुना तप्तकायः, पाणी बद्ध्वा अञ्जलिं कृत्वा गुरुमिदं बभाषे इत्यर्थः। भोः स्वामिन्? अथ अनन्तरं दुःखप्रतियोगि अत्यन्तमङ्गलम्। विश्वविश्वान्तकाले यं कला विशतीत्यसौ विश्वः, तस्य शक्तिः प्रकृतिः सा कला विश्वा कला साम्यावस्थात्वात्, तयोः परमार्थतोपाधित्यागेनैक्यनिर्वचनम्। तस्मिन् काले का अवस्था, काऽनुभूतिरिति

प्रथमः प्रश्नः। कामक्रोधाभावं विनाऽनुभवितुमशक्यावस्थेति चेत्, अस्या अन्या साधनभूता परा क्रोधप्रतियोगित्वपरत्वं यस्यां सा, तस्मात् सा क्रोधघ्ना । समूलं क्रोधं हन्तीति वेदनहेतुत्वाद्विद्या तां वदस्वेति द्वितीयः प्रश्नः। उक्तक्षयफलत्यागहेतुभूताभ्याम्। अथानन्तरं अन्या पूर्वोक्ताभ्यां शान्तिः उपाधिशमनशीलानन्दावाप्तिः का इति तृतीयः प्रश्नः, इत्यादिप्रश्नत्रयानुकल्पं सर्वं वदस्वेत्यर्थः।

श्रीगुरुरुवाच ।

काचै विश्वो यः कयभावे सेवेद्यः
कस्त्वन्या सा काथशब्देन वाच्या ।
काक्यौ लुप्ते यत्र ते योगिलक्ष्ये
तत्त्वन्त्वेकः काथवेत्ता वशिष्ठः ॥ ५ ॥

अस्मिन् श्लोके काथपदार्थौ विश्वेत्यभिधानाभ्यां प्रतिपाद्यते तदुपाधिव्यावृत्त्या लक्ष्ययोरैक्यं "त्वमसी"ति प्रबोध्यते॥ श्रीगुरुर्दत्तः अन्तर्यामी हृदिस्थः सन्तोषमुवाच—काचै विश्व इति। काः कैधातोरादौ वेदान् कायतीति व्युत्पत्त्या सोमपावद्रूपं का इति, हंस हंसेत्यजपामन्त्रोच्चारणहेतुत्वाच्च "यस्माच्छन्दांसि जज्ञिरे" इति श्रुतेश्च। तृतीयारण्यके आत्मखे द्वे का शब्दपर्यायौ । द्रष्टेति तत्पदार्थप्रतिपादकश्रुतेश्च, वै स एव तैत्तिरीये "अभिसंविशती"-ति श्रुतेः । विशतीत्यसौ विश्वः, गन्धर्वप्रश्ने मोक्षधर्मे प्रसिद्धत्वात् । कस्मिन्वेद्य इति चेत्-कयभावे, का संशकस्य जीवभूता प्रकृतिः-की, तस्या अभावे अदर्शने, स ईश्वरो वेद्यः विद्योपाधिकत्वात्; आवरणभङ्गहेतुविज्ञानेनेत्यर्थः। कः काथात् अन्या तु अनिर्वाच्यापि प्रातिभासिकख्यातित्वात् अन्येति निर्देशः, सा की य इतिपुंलिङ्गभयलक्षणार्थं कशब्देन वाच्या, "द्वितीयाद्वै भयं भवती" तिश्रुतेः। का निरतिशयकृत्यनुग्रहसर्वज्ञत्वोपाधिः विद्यारोपित-

त्वात्,की परतन्त्रानुग्राह्यकिञ्चिज्ज्ञत्वोपाधिः अविद्यारोपितत्वात् । का क्यौ काच कीच उपाधिकृत्यशबले ते द्वे यत्र लुप्ते, कुत्रचेत् योगिलक्ष्ये । योगश्चित्तवृत्तिनिरोधः । प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति पातञ्जलसूत्रबोधितचित्तवृत्तीनां निःशेषलयो योगोऽयम् । विकल्पः यस्यात्मनि न स योगी तेन महावाक्यश्रवणमनननिदिध्यासनजन्यात्मज्ञानेन वृत्तिरोधाभ्यासः,क इतिलक्षणत्यागेन न लक्षितं तस्मिन्परब्रह्मणीत्यर्थः । तत् तत्पदलक्ष्यं नतु तत्पदवाच्यं शबलं निर्धर्मकत्वात् । शक्तिग्रहाभावाच्च शुद्धं जहल्लक्षणया तत्पदवाच्यत्यागः, अजहल्लक्षणया निधर्मत्वाच्छक्तिग्रहाभावेऽपि वाच्यव्यावृत्तिमात्रत्यागः, तत्पदलक्ष्याङ्गीकारः । अतएव जहदजहल्लक्षणया लक्षितं तत् त्वम् असीत्यर्थः । सुखदुःखशोच्यपरतन्त्रकर्त्तृभोक्तित्यादि त्वं नासीत्यर्थः । अविद्यारोपितत्वात् तत्पदार्थवत्त्वंपदवाच्यं त्यक्त्वा लक्ष्यं गृहीत्वाऽखण्डवाक्यार्थः । "त्वमेव प्रत्यक्षं ब्रह्मासी" ति श्रुत्या प्रमेयत्वप्रदर्शितत्वाच्च । एवकारार्थे तुशब्दः । एकः आसि पदार्थकः । द्वितीयवृत्तित्यागेन सन्मात्रं भवति "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" 'ति तैत्तिरीयश्रुत्या शक्तिग्रहस्य निवारितत्वात् उक्तलक्षणयैव वाक्यार्थः नतु शक्तिग्रहेण परिभाषाकारैस्त्ववैदिकानां वेदान्यशास्त्रदग्धानां जयार्थं शक्त्या स्वीकृतः, तत्त्वात्मबोधार्थमशक्यत्वात् । "एकस्मिन् विज्ञाते सर्वं विज्ञातमिति" श्रुतेः । अस्ति भाति प्रियत्वेन काथवेत्ता ईशजीवोपाध्यात्मकपदार्थमात्रस्य सत्ताऽभिन्नत्वेन वेत्ता ज्ञातेत्यर्थः । आत्मज्ञानवृत्तिलये विदेहमुक्तो वसिष्ठोऽसीत्यर्थः "केनकं पश्येदि" त्यादिश्रुतिभ्यः ॥ ९ ॥

का शब्दोऽयं वाच्यकार्यो हृदिस्थ-
स्तस्यावासं कायमाहुर्मुनीन्द्राः ।

तदुभयं कायिकायौ च काथौ
तत्त्वन्त्वेकः काथवेत्ताऽवशिष्टः ॥ ६ ॥

अस्मिन् श्लोके काथइति कायिकायशब्दाभ्यां स्पष्टं व्याकरोति । काशब्दोयमिति वाच्यकायीतिव्युत्पत्त्या उल्लेखत्वेनायं काशब्दः कायिनः वाचक इत्यर्थः । वाच्यः प्रतिपाद्यश्चासौ कायी यन्त्रारूढः भूतभ्रामक ईश्वरः हृद्यङ्गुष्ठमात्रा च काये प्रतीयमानत्वाद्व्यापकोपि हृदिस्थः हृदये स्थितत्वात् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढ़ानि मायये" ति भगवदुक्तेः । तस्येश्वरस्य भोक्तृत्वद्रष्टृत्वेन आवासं आ समन्ताद्वासो यस्मिन् तं पिप्पलाय मौनत्वात् तत्किमितिचेत् कार्थं शरीरं तत्त्वं सङ्घातक्षेत्रं सजीवमिति मुनीन्द्राः व्यासादयो मुनीश्वरास्तमाहुः । "ऊर्ध्वमूलमधः शाखमश्वत्थ" मिति श्रुतिभगवदुक्तिभ्याञ्च तत्तस्मादुभयलक्षणोऽयं सुखदुःखभोगहेतुकत्वेन प्रसिद्धत्वात् । थः–क्षेत्रशवलो जीवः वाच्यः न तु लक्ष्यः, सतत्त्वातिरिक्तकेवलक्षेत्रस्यासत्त्वात् । कायिकायौ––कायाधिकरणः कायीच कायोऽस्यातः कायः, तावेव कायौ पर्यायत्वेन काथशब्दार्थकावित्यर्थः । न तु लक्ष्यौ प्रातिभासिकव्यावहारिकोपाधिस्थितसन्मात्रैक्यत्वादेकस्तत्त्वमिति । लक्षितार्थत्वेन काथयोर्वेत्ता "नाऽसतोविद्यतेभाव" इतिभगवदुक्तत्वात् । शक्तिसत्त्वाभिन्नप्रातिभासिकरजतमिदमिववेत्तृत्वात् । स्वप्नदृष्टदर्शनवृत्तिजाग्रद्वृत्त्या निरस्तेव तन्निरस्तवेद्ये अवशिष्टः उवरितस्त्वमसीत्यन्वयः आनिर्देश्यत्वात् ॥ ६ ॥

नाहं काक्यौ तौ क्षरौचाक्षरौ भो–
ज्ञात्वा ज्ञाता चैत्यलिङ्गं त्यज त्वम् ।

वाच्ये त्यक्त्वा लक्ष्ययोरैक्यशुद्धं-
तत्त्वन्त्वेकः काथवेत्ताऽवशिष्टः ॥ ७ ॥

केनाभ्यासेन कथं किं प्राप्यमिति चेदित्थं नाहमिति-तौ उक्तद्वयौ काक्यौ वाच्यौ जडावध्यस्तावुपाधिस्वरूपौ अहं न अनिर्देश्यशुद्धलक्ष्यैक्यतत्स्वरूपत्वात् इत्यभ्यासेन। तावुपाधी पुनः किंलक्षणौ क्षरौ विकृतित्वेन क्षरन्ताविति क्षरधर्मिणौ विद्याऽविद्याकार्यत्वात् । चेत्यपरं, अक्षरौ नित्यमुक्तजीवन्मुक्तावस्थोपाधिकूटस्थावक्षरधर्मिणौ केवलकारणोपाधिकत्वात् । स्वाश्रयस्वविषयत्वात् स्वज्ञानेन ज्ञात्वा ज्ञाता स्वयं भो शिष्य ! त्वं चैत्यलिङ्गं त्यज, सदिति प्रधानं लिङ्ग्यते ज्ञायते येन तत् प्रख्याप्रवृत्तिस्थितिशीलात्मकं लिङ्गं जहीत्यर्थः । अनिर्वचनीयदर्शनत्वेन "चूडालाख्याने" वाशिष्ठे चित्तत्यागोक्तत्वात् चित्तप्रवर्तकप्रवर्त्यत्वे वाच्ये शवले त्यक्त्वा शुद्धनिर्धर्मकचिन्मात्रलक्ष्ययोः ऐक्यं निरस्तसंख्याकं, तच्च शुद्धमित्थं तत्त्वं तत्स्वरूपस्त्वमसि, वाच्यं नासीत्यर्थः। त्विति निश्चयेन । तत्स्वरूपेण एकः न द्वितीयः । काथवेत्ता त्वं कथमिति चेत् विकल्पितवेत्तृत्वात् काथवेत्तासि, तदभावेऽवशिष्ट इत्यर्थः ॥ ७ ॥

लोकालोकौ यस्य सिद्ध्या प्रलुप्तौ
शीतोष्णे ते सप्रभे द्वे प्रलीने।
आ आद्यन्तौ साभिमानौ प्रणष्टौ
तत्त्वन्त्वेकः काथवेत्ताऽवशिष्टः ॥ ८ ॥

एतादृशविशिष्टानुभवे केन कारणेन किं लुप्तमिति चेदाह–लोकालोकाविति । लोक्यते चक्षुःप्रधानेन्द्रियैः प्रत्यक्षेणासौ लोकः, सविशेषव्यक्तात्मकत्वात्। तैरप्रत्यक्षत्वान्नालोक्यते

असौ अलोकः, अविशेषलिङ्गालिङ्गात्मकव्यक्तिशून्यत्वात् । लोकश्च अलोकश्च तौ, अथवा "सच्च त्यच्चाभवदि"ति काठकश्रुतिबोधितौ । सदिति भूम्यप्तेजांसि दित्यदितिवाय्वाकारोऽ चाक्षुषप्रत्यक्षाप्रत्यक्षौ । यस्य "अक्षरं ब्रह्म परममि"ति भगवद्बोधितस्याक्षरस्य सिद्ध्या गुरुशास्त्रात्मप्रत्ययप्राप्त्या प्रलुप्तौ आत्यन्तिकज्ञानप्रलयङ्गतौ । इमे उल्लेखत्वात् सर्वभूतप्रत्यक्षविषये शीतोष्णे द्वे कफपित्तात्मकचन्द्रसूर्यस्वरूपे, श्वेतारक्तप्रभाभ्यां सप्रभे हृन्नाभियोगिप्रत्यक्षे प्रलीने निर्बीजसमाधौ प्रलयङ्गते इत्यर्थः । ननु निद्रामरणादेः सबीजानां पुनर्भवात् । "भवप्रत्ययः प्रकृतिलयानामि"ति पातञ्जलोक्तेः । आ आद्यन्तौ—आमहाभूतब्रह्मादिपिपीलिकान्तानां भूतानामादिः अजस्रं सम्भवः, अन्तः प्रलयश्च तौ । साभिमानौ—उत्पन्नोऽस्मि, मृतोऽस्मीत्यभिमानाभ्यां संहृतो यथा रज्जुसर्पो रज्जुज्ञानेन नष्ट इव प्रणष्टौ अपुनर्भवङ्गतावित्यर्थः । " उत्पत्तिस्थितिलयतिरोधानधर्मवार्जितं कैवल्यं तस्य तदिति नामे"ति श्रुतेः । तत् त्वं जीवश्वेरोपाधिद्वितीयशून्यत्वेन एकः अद्वितीयः, सर्वकारणकार्यकाथोपाधिसाक्षित्वात् तदारोपितवेत्तृत्वाच्च । काथवेत्ता तत्स्वरूपभूतत्वेन गलितवेत्तृत्वेऽवशिष्टः उर्वरित इत्यर्थः ॥ ८॥

भूरापोग्निर्वायुखे मानसन्त--
दूबुद्ध्यात्मा वै षोडशान्ये विकाराः ।
शुद्धस्त्वं यः प्राकृतः पञ्चविंश-
स्तत्त्वन्त्वेकः काथवेत्ताऽवशिष्टः ॥ ९ ॥

श्लोकेऽस्मिन् क्षेत्रस्वरूपः क्षेत्राधिकरणकः क्षेत्रनियन्ता शुद्ध इति चतुःसंज्ञाभिराह—भूरापोऽग्निरिति । भूर्गन्धगुणा, रसरूपस्प-

र्शशब्दगुणापि स्यात् आकाशादिचतुर्विधभूतकार्यत्वात् । अग्निः रूपगुणः, स्पर्शशब्दगुणोऽपि भवति, खादिद्विविधभूतकार्यत्वात्। वायुः स्पर्शगुणः शब्दगुणश्च आकाशकार्यत्वात्। खं शब्दैकगुणं "तस्मादात्मन आकाशः सम्भूत" इति श्रुतेः। वायुश्च खश्च वायुखे, सङ्कल्पविकल्पात्मकं मानसं, तत् कारणमहङ्कारः, अहङ्कारकारणं महत्, अध्यवसायात्मिका बुद्धिः प्रत्यक्षानुमानोपमानानुपलब्ध्यर्थापत्तिशब्दात्मकषट्प्रमाणजन्यवृत्तिका प्रमारूपचैतन्याभिव्यञ्जकत्वात् । निरावरणा समष्टिः आत्मा । षोडशविकृतीन्सप्तप्रकृतीनततीत्यात्मा जीवभूता प्रकृतिः । इत्यष्टधा प्रकृतिः तस्या अन्ये विकाराः षोडशसंख्याकाः । का इति चेत् घ्राणरसनचक्षुस्त्वक्छ्रोत्रमिति बुद्धीन्द्रियाणि, पायूपस्थपादहस्तवागिति कर्मेन्द्रियाणि पञ्च, गन्धरसरूपस्पर्शशब्द इति पञ्चतन्मात्राण्येवं पञ्चदश कार्यरूपं मनश्चेति षोडश, तत्र त्रयोविंशतितत्त्वलक्षणकार्यस्य चतुर्विंशमव्यक्तं तद्भावः प्राकृतः। "सा सत्ता सा महानात्मा तामाहुस्त्वतलादय" इति व्याकरणहरिकारिकोक्तेः स एव जीवः। सविवेकेन तद्भिन्नत्वेन पञ्चविंशः समष्टिः त्वं सर्वक्षेत्रेषु क्षेत्रज्ञः, यः शुद्धो वासुदेवस्तत्पदार्थलक्ष्यकः। तेनैकः क्षेत्रक्षेत्रज्ञयोः काथयोर्ज्ञाता ज्ञानस्वरूपश्च । तदभावेऽवशिष्टोऽसीति विद्धीत्यर्थः। यद्वा, व्यक्ताव्यक्ताद्रहितो यः शुद्धः अनिर्देश्यः। नतु वाच्यः जड़दुःखशान्तिव्यावृत्त्या वेदप्रतिपाद्यत्वात् । तत्स्वरूपस्त्वं शुद्धोऽप्यज्ञानतः प्रकृतिभावस्वरूपत्वात् प्राकृतः, प्रकृत्यधिकरणः अनिर्वाच्यप्रकृतिप्रातिभासिकसत्त्वरूपेण ग्राह्यत्वात् प्रकृतित्वाच । चतुर्विंशमिदं क्षतत्राणात् क्षयात् क्षरणात् क्षेत्रमिव क्षेत्रमिति ज्ञानेन वित्रर्त्तमयामिति क्षेत्रैक्यं तिरस्कृत्य क्षेत्रज्ञोऽहं पञ्चविंशः, क्षेत्रज्ञत्वपञ्चविंशत्य-

परित्यागेन क्षेत्रक्षेत्रज्ञयोर्ज्ञाता वृत्तिस्वरूपं षड्विंशमहमिति विद्धीत्यर्थः । तेन षड्विंशतिसंख्या काथवेत्तृत्वात् । तदभावेऽवशिष्टः असीत्यर्थः ॥ ९ ॥

एतादृशं कथमनुभूतं, गीतश्च कैरेवमनिर्देश्यविषयत्वाच्चेन्मैवम् ।

द्रष्टा दृश्यं दर्शनं यत्र लुप्तं
सत्संवित्त्या योगिभिश्चानुभूतम् ।
वेदे गीतं नेति नेतीति शब्दै-
स्तत्त्वन्त्वेकः काथवेत्ताऽवशिष्टः ॥ १० ॥

द्रष्टेति । "यदज्ञानादिदं भाती" तिश्रुतेः । आवरणहेतुविक्षेपशक्त्यारोपितद्रष्टृत्वं, प्रमातृचैतन्ये दृश्यं दृष्टमित्यनेन सुखी दुःख्यहमिति अनुभववृत्तित्वात् द्रष्टा । प्रमाणचैतन्ये दृश्यमिदमिति प्रमाणजन्यवृत्त्यारोपितं दर्शनम् । प्रमेयचैतन्ये दृश्यमस्तीति भाववृत्त्यारोपितत्वात् दृश्यं "यज्ज्ञानाद्विनिवर्तते" इत्याथर्वणश्रुतेः । यथा रज्जुसर्पे रज्जुज्ञानादिवात्मज्ञानव्यावृत्तित्वेन "प्रज्ञानं ब्रह्मे"ति श्रुतिजन्यात्मज्ञानवृत्त्या लुप्तम् अत्यन्तादर्शनं गतम् । यत्र यस्मिन्प्रकृष्टज्ञानमात्रस्वरूपे ब्रह्मणि । ननु वितर्कविचारानन्दास्मितानुगमविषये भेदभावदर्शनत्वात् । तर्हि द्रष्टादिभेदशून्यकेन कैरनुभूतमितिचेत् आह–सत्सम्वित्त्या; "सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमि"ति श्रुतिबोधितसदितिशून्यव्यावृत्त्याऽद्वितीयमित्यावरणविक्षेपस्वरूपाविद्ययैकत्वाद्यारोपितत्रिवृत्तिप्रवृत्तिकृतिरूपाद्वित्वमत्यन्तव्यावृत्त्या सन्मात्रमेवेति सत्संवृत्तिस्तया योगिभिः महावाक्यश्रवणमननिदिध्यासननिरुद्धवृत्तिभिरनुभूतं तद्भूत्वा तदनुभवेनेत्यर्थः । ननु भणकैर्गीतमि-

तिचेत् वेदैः–ऋग्यजुःसामाथर्वणैः गीतं कीर्त्तितम् । नेतिनेतीति शब्दैः "नेतिनेतीतिगार्गी"ति बृहदारण्यकश्रुतेः । चैतन्यातिरिक्तं नेतिनेतीत्यर्थः । नेतिमुखेन भावे मायाकार्ये च निरस्ते सर्वभानास्तीति वक्तुमशक्यत्वात्; विक्षेपावरणभावशून्यं सन्मात्रं त्वमसीर्थः । नत्वनात्मा "त्वमेव प्रत्यक्षं ब्रह्मासी"ति श्रुत्युक्तत्वात् । तेनैकः श्रुत्युक्त एवकारेण ब्रह्मातिरिक्तद्वितीयनिरासादर्शितत्वाच्च । काथवेत्ता; किञ्चिज्ज्ञत्वानियन्तृत्वकाथोपाधिज्ञातृत्वात् । तन्निवृत्तौ अवशिष्टइत्यर्थः ॥ १० ॥

अस्मद्युष्मद्वाच्यबाह्यान्तरे द्वे
स्थूलं सूक्ष्मं कारणं सत्त्वसच्च ।
यस्मिन्नेव मायया कल्पितं वै
तत्त्वन्त्वेकः काथवेत्ताऽवशिष्टः ॥ ११ ॥

अद्वैतब्रह्मणि केनेदं कल्पितमिति चेदाह–अस्मदिति । अस्मद्युष्मद्वाच्यबाह्यान्तरे "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"तिश्रुतेः । देहाधिकरणकमध्यात्मम् अस्मत्प्रत्ययवाच्यं प्रत्यग्वृत्त्याश्रयत्वात् क्षेत्रज्ञमित्यर्थः, अजामेकां लोहितशुक्लकृष्णामिति तेजोबन्नात्मकक्षेत्रत्वात् । युष्मत्प्रत्ययवाच्यं रूपाश्रयत्वात् । विषयविषयित्वाभ्यां बाह्यश्चान्तरश्चेति बाह्यान्तरे ते द्वे निर्दिष्टे । "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विद"इतिभगवदुक्तेः, "सत्यञ्चानृतञ्चे"ति श्रुतिनिर्दिष्टत्वाच्च । इदं शरीरमित्युल्लेखितयुष्मत्प्रत्ययवाच्यस्य भेदत्रयमाह–स्थूलम् । त्रिवृत्तं करवाणीति श्रुतेस्त्रिवृत्करणं भूतकार्यं सविशेषत्वात् । "तस्मादात्मन आकाशः सम्भूत"इति तैत्तिरीयश्रुतेः पञ्चानामुत्पत्तिश्रवणात् । यथा जलमृन्मिश्र-

द्विकरणकृते गृहे मठाकाशवायूष्मादि मठाधिकरणकत्वेन प्रतीयमानत्वात् पञ्चीकृतश्रोत्रियानुवादाच्छ्रौतं, नतुस्मार्तं पञ्चीकरणं, पञ्चीकृतभूतकार्यविराट्शरीरमित्यर्थः। सूक्ष्ममपञ्चीकृतभूतकार्यत्वात् सहिरण्यगर्भलिङ्गश्चेत्यर्थः। कारणं—निरोधावरणशक्त्यात्मकप्रज्ञमलिङ्गत्वात्, शरीरद्वयसमवायहेतुत्वाच्च। एतेषां सदितिमात्र सत्त्वम्। तु—इअपरेषामात्मन्यभावत्वमसत्। च समुच्चयार्थः। यस्मिन्मायाश्रये ब्रह्मणि अस्मद्युष्मत्प्रत्ययगोचरस्थूलसूक्ष्मकारणमित्युक्तपूर्वं सर्वम्। एवं सप्रकारकम्। मायया—अघटघटनपटुरूपया, स्वयमेव कल्पितपाषाणशालभञ्जिकेव। वै-निश्चितं तत्त्वं नेदं सम्यग्दर्शनत्वात्, न शालभञ्जिकापाषाणावित्ति। द्वैतशून्यत्वात् एकः सङ्ख्यागुणरहितः। काथार्थकयोरुपाध्योः सत्ताया नातिरिक्तत्वेन वेत्ता ज्ञाता। ज्ञेयशून्यत्वादवशिष्ट इत्यर्थः॥ ११॥

व्यक्ते दृश्यादृश्यधर्मेऽथ भावे
सन्मात्रन्त्वं स्वानुभूत्या भवेदम्।
शून्यङ्कृत्वा शून्यमेतच्च चित्त्वा-
च्चिद्रूपं त्वं काथवेत्ताऽवशिष्टः॥ १२॥

तर्हि कथमुत्पन्नसम्यग्विवेकिना ऽस्मिन्दृश्ये अभ्यसनीयमिति चेत्—व्यक्त इति। महाभौतिके सकारणे आत्मगोचरत्वाद्दृश्ये प्रमेयचैतन्ये। यथा खण्डायां मृदाशिल्पनिमित्तनौकादिनानापदार्थमिव दृश्यं धर्मत्वं, प्रमेयप्रमाणप्रमातृसत्तातिरिक्तत्वेन माभूत् ते तव मायानिमित्तत्वात्। स्वानुभूत्या "अन्यदेव तद्विदितादथो अविदितादधि" इतिश्रुतिबोधितस्त्वं तस्यानुभूतिः, विदितादविदितादन्यदेवेति, तया सन्मात्रमिदमनुभूतं तत्त्वं भवेत्यर्थः। सत्ताति-

रिक्तपदार्थाभावात् ज्ञातृज्ञानज्ञेयव्यवहाररहितं सदिति किं न किमपि शून्यमेव इतिचेन्न, एतच्छून्यं सर्वाभावत्वं भावे प्रतीयमानत्वात्। सत्ताश्रयि तत् शून्यंशून्यं कृत्वा चिद्रूपत्वात्; शून्यं शून्यस्वरूपं सच्चिन्मात्रं तत्स्वरूपत्वात् त्वं चिद्रूपः जगद्भावाभावसाक्षी मायाविद्यारोपितशिवजीवोपाध्योर्वेत्ता, तदपवादे अवशिष्ट इत्यर्थः॥ १२॥

अध्यारोपापवादरहितोऽसीत्यर्थः। एतादृशे—

अन्तर्बाह्ये चित्त्वसत्त्वे त्यज द्वे
स्वानन्दैक्यं केवलं त्वम्भवस्व।
तद्रूपत्वादद्वयं तत्त्वन्तत्त्व
वेत्ता कोस्मिन्कस्य वेत्तृत्वमस्ति॥१३॥

ननु निदिध्यासनं कर्तव्यं न वा, सति सामर्थ्ये अविकल्पत्वेन स्थेयमिति। अन्तः अन्तरे; चन्द्रास्ते अनुदितसूर्ये अन्तःकुम्भकदहराकाशे। सूर्यास्तेऽनुदितचन्द्रे द्वादशान्ते बाह्यकुम्भके। व्यक्ताव्यक्तातीतसर्वान्तरः सर्वसाक्ष्यहमित्यन्तरं तस्मिन् चिदाकारवृत्तित्वं चित्त्वं, तत्स्वानुभूत्या व्यक्ताव्यक्तात्मकं सर्वं बाह्यं, तत्सन्मात्रोऽहमित्युदारो भव। चतुष्टयव्यावृत्त्या सदिति सदाकारवृत्तित्वं सत्त्वं सन्मात्रे वृत्त्यभावात्। ते चित्त्वसत्त्वे द्वे जडशून्यग्रासके चित्सदाभासे त्यजेत्यर्थः। जडशून्यव्यावृत्तौ दुःखतमोग्रासकं विज्ञानमानन्दमात्मेति श्रुतिश्रवणेन स्वानन्दैक्यं, आनन्दमात्रेणा विकल्पस्वरूपेण सहात्मैक्यं दुःखात्यन्ताभावात् आनन्द एवास्मीत्यानन्दावभासवृत्तित्यागेन केवलं आनन्दमात्रम्भवेत्यर्थः। हरिहरसमाधिस्वरूपत्वात्। ननु काष्ठात्यन्तदाहोत्तरं ज्वालात्यागः स्वयमेव भवति। तत्र

त्यज इति असमञ्जसमिति चेन्न "येन त्यजसि तं त्यजे" ति मोक्षधर्मोक्तेः। अभ्यासादानन्दमयो ब्रह्मेति केषाञ्चिद्भ्रमः, यतः प्राचुर्यत्वान्निर्देश्यानन्दमयस्य व्यावृत्तिद्वारा "ब्रह्मपुच्छं प्रतिष्ठे" त्युपसंहारबलात् "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे" ति श्रुतिप्रतिपादकत्वमानिर्देश्यब्रह्मण इति तैत्तिरीयभाष्ये उक्तत्वात्। तद्रूपत्वात्–अतो निरसनेन तत् ब्रह्मरूपत्वात् तत्त्वं न परमार्थतः तेन ब्रह्मणाऽद्वयस्त्वमसीत्यखण्डवाक्यार्थः। नतु संसर्गविशिष्ट इत्यर्थः। अस्मिन्नद्वयानन्दमात्रे को वेत्ता न कोऽपि, वेत्रभावात् कस्य वेद्यत्वं न कस्यापि, निर्धर्मके आरोपितदृश्यभावात्। अस्ति चेत्स्वयं स्वस्य वेद्यं वेदनं वेत्ता, स्वविषये प्रमाणप्रमेयप्रमातृत्वत्यागादित्यर्थः। अत एवाऽविकल्पस्वरूपम् "आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तये" दित्युक्तेः॥१३॥

एवम्भूते शुद्धबुद्धे स्वरूपे
काथावस्थां ब्रूहि मे त्वम्प्रबुद्धः।
काथावेत्ता कोऽहमित्यात्मबाधः
निःसङ्गेऽस्मिन्नुत्थिता त्वय्यविद्या॥१४॥

एवम्भूते–पूर्वोक्तब्रह्मस्थितिभूते अनुभवारूढे–शुद्धबुद्धे–शुद्धश्च प्रकृतिविकृतिरहितं तत् बुद्धश्च स्वप्रकाशज्ञानं तस्मिन्। स्वरूपे स्वश्च तद्रूपं तस्मिन्। विश्वविश्रान्तकाले काऽवस्थेति–पृच्छकः मम वाक्यश्रवणजज्ञानेन प्रबुद्धः प्रकृष्टबोधवान् त्वमेवेदानीं मे मां प्रति ब्रूहि वदेत्यर्थः। तत्रावस्थातीते किञ्चिदसि चेदत आह-काथावेत्तेति। न किमपि वेद्यवेदनवेत्तृत्वाभावात्। मित्रमुखेन भगवता परिहासव्याजेनोक्तं सत्यमप्यबुद्धाऽज्ञानाभिमाननिमित्तका काथावस्था कोहमितिप्रत्ययलक्षणा पृच्छा हेत्वावरणविक्षेपशक्तिरूपाऽविद्या। कुत्र चेत् चिद्घने त्वयि उत्थिता तया स्वविषया-

अयित्वबलेनावृतोऽसि खे नीलिमेव स्थाणौ पुंभ्रम इव आत्मबाधः आत्मनो निःसङ्गस्यावरणं अघटनघटनपटुत्वात् तव ॥१४॥

शून्यालम्बाऽलम्बनं सा भवेत्ते
सूर्याभायां वारिभासस्तथेयम् ।
भिन्नाभिन्ना नैव तस्मादवाच्या
जह्येनां स्वामद्वयानन्दबोधात् ॥ १५ ॥

विक्षेपावरणाऽत्यन्ताभावत्वान्निःसङ्गस्य ते तव शून्यालम्बालम्बनं--शून्यालम्बस्य आश्रयाश्रयिभावनिरस्तस्य आलम्बनं आश्रयि, आच्छादनमभवदित्यर्थः । कथमिति चेदित्थम् । यथा, सूर्याभायां सूर्यस्याऽसमन्तादाभा प्रकाशना तस्यां वारिभासः । तथेयं विवर्त्तरूपा यस्य सन्मात्रस्य विवर्त्तः तस्माद्भिन्नाभिन्ना तदात्मिका तद्विलक्षणा वा, सत्यसती उभयात्मिका तद्विलक्षणा वा, सावयवा निरवयवा तदुभयात्मिका विलक्षणा वा, न अनिर्वचनीयत्वात् ।एवमद्वितीये ब्रह्मणि परमार्थभाववद्द्रव्यासम्भवात् । तस्मादेषाऽवाच्या । कथमिति चेत् । ब्रह्मणोऽद्वितीयत्वहानेर्भिन्ना न "विश्वमायानिवृत्तिरि"ति श्रुतेः। अभिन्ना च "मायामेतान्तरन्ती"ति श्रवणात् । भिन्नत्वाभिन्नत्वे परस्परप्रतियोगित्वात् नोभयस्वरूपा । भिन्नाभिन्नपदार्थयोर्विलक्षणपदार्थात्यन्ताभावात् तद्विलक्षणा न । सतीति चेन्न "न सदासीदि"ति श्रुतेः । सांख्यप्रधानशब्दवन्नेतीत्यर्थः । असतीति चेन्न "नासदासीदि"ति श्रुतेः असत्पदार्थस्याप्रतीतेः । अनादिमायातरणे व्यासादिसत्तायामप्रवृत्तिः स्यात्। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवता साधनं नोक्तं स्यात् । तन्निमित्तसुखदुःखानुभवो न स्यात् । तर्हि सदसदात्मिका स्याच्चेन्न, परस्परविरुद्धधर्मत्वात्, तयोर्विलक्षणपदार्थशून्यत्वात् । निरवयवास्ति चेन्न, नि-

रवयवकारणस्य सावयवजगत्कार्यासम्भवात्। तत्र तार्किकाः निरवयवपरमाणोः सावयवद्व्यणुकादिकं कार्यं भवत्येवेति चेन्न-द्व्यणुकादि पृथिव्याश्चरमावयवत्वात् परमाणुश्चासावनवयवो भवति। तत्र कार्यस्य सम्भवः। ननु चरमावयवव्यक्तशून्यमहत्परिमाणविशिष्टमायायाः सावयवकार्यासम्भवात्, अणुत्वपरिमाणशून्यत्वात्। तर्हि सावयवास्त्विति चेन्न "महतः परमव्यक्तमव्यक्तात्पुरुषः पर" इति श्रुतेः। अव्यक्तत्वाच्च सावयवा वक्तुमशक्या भवेत्। सावयवास्त्विति चेन्न,सावयवनिरवयवयोः परस्परप्रतिकूलत्वात्। तद्विलक्षणेति वा निरवयवा चेन्न, उभयविलक्षणपदार्थाभावात्। एवं द्वादशविकल्पशब्दाऽविषयत्वात् अवाच्या—न वाच्या न निर्वचनं यस्याः सा। अनिर्वाच्येति—गुरुशास्त्रात्मप्रतीत्या ज्ञात्वा एनां अतात्त्विकाऽन्यथाभावविवर्त्तेत्यनुभूतां जहीत्यर्थः। कस्मादिति चेत्। अद्वयानन्दबोधात्—भोक्तृत्वादिद्वितीयस्यात्यन्ताभावात्। अद्वयश्चासावानन्दश्चासौ बोधस्तस्मात् स्वाश्रयां स्वविषयाम्। स्वकीयां स्वां—स्वबोधेनैव रज्जुबोधेन रज्जुसर्पस्येवाऽन्तं गच्छेत्यर्थः। "नान्यः पन्था विद्यतेऽयनाये"ति श्रुतेः। "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुतेश्चेति दिक् ॥ १५ ॥

वेद्याभावे कस्य वेत्ताऽत्र कोऽसौ
वक्ष्याम्यस्मिन्भाषणं मे शृणु त्वम्।
काथेत्यस्याः सा न भाति त्वमेकः
सद्बोधार्थं वाक्यमेतत्प्रवृत्तम् ॥ १६ ॥

तर्हि वेद्याभावेति—वेद्याभावे वेद्यविषयादर्शनकः असावयमात्मा अत्राद्वयानुभवे कस्य विषयस्य वेत्ता ज्ञाता, किन्तु ज्ञेयज्ञातृत्वाभावान्न कोपीत्यर्थः। तर्हि किमर्थं काथवेत्तासीति वाक्यप्रयोगः अस्मिन्विषये अहं त्वां ब्रवीमि, मे मम भाषणं शृणु। काथः—काथ-

इति—का शब्दप्रतिपाद्यपुरुषस्येयं प्रातिभासिकसत्ताऽभिन्ना ई-श्वरोपाधिस्वरूपा। व्यथतीति–थः संसृतिभयमुत्पादयति जीवानां यथा–सूर्येऽन्धकारस्वरूपत्वमिवोलूकदृष्टिवत् जीवेश्वरोपाधिरूपस्वरूपोन्मुखस्फुरणद्वयलक्षणा बन्धमुक्तिहेतुका अस्याः काथसंज्ञकमायायाः स्वस्याः स्वयं सा माया भाता प्रकाशिका न जडत्वात्। तर्हि अस्याः प्रकाशकः क इति चेत् त्वं त्वमेवालम्बनं साक्षी सर्वाश्रय एकोऽद्वितीयः भासकोऽसीत्यर्थः। एतदर्थं काथवेत्तासीति वाक्यप्रयोगः। "सदेव सोम्येति" श्रुत्युक्तः सतो बोधः सद्बोधस्तदर्थम्। सद्बोधार्थं वाक्यं–काथवेत्ताऽसीति प्रवृत्तम्। एतत् पूर्वमुल्लेखितं सद्बोधितुमित्यर्थः॥ १६॥

रामः दत्तः॥

सन्मात्रोऽहं सत्तया सर्वमेकः
क्रोधघ्नाऽस्याः काथविद्यापराऽन्या।
चिन्मात्रोऽहं चित्स्वरूपश्चिदात्मा
सृष्ट्यन्तानां साक्षिरूपोऽव्ययोऽहम्॥ १७॥

सन्मात्र इति। अस्मिन् श्लोके पूर्वप्रश्नत्रयाणां प्रत्येकत्वेन प्रत्युत्तरमाह–काथवेत्ता काथोपाध्यभावेऽवशिष्ट इत्यभावशून्यो यः सन्मात्रः सोऽहं, न तु शून्यमसन्मात्रं तत् सत्तया मम सन्मात्रस्य प्रातिभासिकव्यावहारिकसत्ता तया सर्वमस्तीति प्रतीयमानत्वात्; सद्भिन्नं नास्तीति प्रतीतेश्च सर्वत्रैवैकोऽहमित्यनुभवः। "पुरुष एवेदं सर्वमि"ति, "वासुदेवः सर्वमि"ति च श्रुतिस्मृती। ब्रह्मणि गुरुतः श्रवणमननिदिध्यासनबलात् दृढश्चेत् पूर्णकामस्तस्मात् कामाभावत्वहेतुक्रोधाभावत्वात् सद्विधेयम्। अतएव क्रोधघ्ना–क्रोधं हन्तीति क्रोधघ्ना विषयत्वाऽसिद्धेश्च अस्या विद्यायाः। अथाऽनन्तराऽन्या परा उत्कृष्टा विद्याऽज्ञा-

नप्रतियोगिन्यात्मवेदनाभिव्याञ्जिका, काऽस्ति ? किन्तु न कापीयमेवास्तीत्यर्थः, इति क्रोधघ्नविद्याप्रत्युत्तरम् । विश्वविश्रान्तकाले काऽवस्थेति प्रश्नोत्तरमाह-चिन्मात्रोऽहं-क्षेत्रजडांशव्यावृत्तिका चिद्वृत्तिस्तयाऽहं चिन्मात्र इत्यनुभवः । तस्य स्वरूपं किमिति चेत् चित्स्वरूपः-चिच्च तत्स्वं चित्स्वरूपमेव चित्स्वरूपः । किंलक्षणश्चिदात्मा-चित्स एव क्षेत्रमततीति क्षेत्रभातित्वात् । पुनः कीदृश सृष्ट्यन्तानां "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्युक्ताः खादिभूतानां सृष्टयो भूतानां प्रतिलोमेन स्वकारणेषु लयाः । अतो यत्प्रयन्त्यभिसंविशन्ती" ति श्रुतिबोधितास्तेषां साक्षीति तटस्थलक्षणकः तद्रूपो जगत्कारणोऽहमिति, प्रथमं निदिध्यासनं गुर्वनुगृहीतस्य पूर्वोक्तं तत्पश्चात्कर्तव्यम् । तर्हि उपादानकारणस्य ब्रह्मणो मृद्राशेरिव मृद्भाण्डकरणे व्ययस्तथाऽस्त्विति चेन्न अव्ययः-द्रव्यत्वगुणत्वाभावान्न व्ययो यस्येत्यर्थः । अविक्रियत्वात्स्वरूपोऽहम् ॥ १७ ॥

एवं भूते काऽथ शुद्धास्त्यवस्था
व्यक्ताव्यक्तातीतमन्तर्बहिःस्थम् ।
व्यक्ताव्यक्तं तन्न बाह्यान्तरे वे
मौनेनाऽयं वाचकस्त्र्यक्षरोऽस्य ॥ १८ ॥

एवमुक्तप्रकारेण भूते ममोपदेशजज्ञानेनाऽनुभवप्राप्ते । अथ जडव्यावृत्त्यनन्तरं काऽवस्था ? विश्वविश्रान्तकाले शुद्धा निर्मलास्तीति, ममानुग्रहेण सर्वज्ञस्त्वं पश्य न कापीत्यर्थः । अवस्थातीतब्रह्मैव शान्तिः । का इति पृच्छायाः प्रत्युत्तरमाह-व्यक्ताव्यक्तातीतं-व्यक्तं मायाकार्यं त्रयोविंशतितत्त्वसङ्घातं, चतुर्विंशतत्त्वमव्यक्तं माया भगवच्छक्तिर्जीवभूता, तयोः साभासयोरतीतं भिन्नं निराभासत्वात् । तद्व्यक्ताव्यक्तं यस्माद्भिन्नं न तदाश्रयं तत्सत्ता-

कत्वात् । तत् अन्तर्बहिःस्थम्–अन्तरे च बहिश्च । यथेक्षुरसगुडश-र्करादिषु तथान्तरे स एव रसः, मृदशिल्पिनिमित्तरूपस्पर्शा-दित्वेन बहिस्तथा तयोरन्तर्बहिरस्तिभातिप्रियत्वेन स्थितमपि व्यक्ताव्यक्तं न, यथा जलमपिसमुद्रो नाश्रयधर्मत्यागात् । तथा तत्स्वरूपमन्तर्बाह्यं नामरूपसुखदुःखं मायाकार्यं तस्मिन्कैवल्ये नेत्यर्थः । "नेति नेतीति गार्गी"ति श्रुतेश्च ॥ १८ ॥

अस्य कैवल्यस्य त्र्यक्षरो मौनेन वाचक इति तदेवाह–

आत्मा शब्दो विन्दुनादान्वितोऽयं
शक्त्या साकं मायिकेनैव शान्तः ।
निर्वाणं तत्केवलाऽनन्दबोध-
मेवम्भूता काथशान्तिः परात्मा ॥ १९ ॥

आत्मेति–तर्हि काथबोधप्रणवौ कथमनिर्देश्यवाचकाविति चेदाह–आत्मा अकार उकारो मकार इति । त्रिवर्णस्वरूपोऽसौ अकार उकारो मकार इति । तान्येकश्वासमभवत् तदेत "दोमि" तिश्रुतेश्च मन्त्ररूपः, शब्द्यते इति शब्दः विन्दुनादान्वितः, प्रण-वोच्चारोत्तरसानुनासिकध्वनिमात्रः, सर्वत्र समः, तुरीयज्ञानवृत्त्यु-त्पादकानुज्ञानुभवदो विन्दुरित्यर्थः । ताल्वादिस्थानवर्जितकेव-लाऽकारतन्मात्रो नादः दशमवृत्तिनिरुद्धावस्थानुभवदः । विन्दु-श्च नादश्च विन्दुनादौ ताभ्यामन्वितो युक्त इत्यर्थः । अयं प्रणवः सर्ववेदेषु वेदादित्वेन प्रसिद्धत्वादुल्लेखोयमिति । शक्त्या साकमकारेण स्थूलविराट्कारणपञ्चीकृतभूतकार्यव्याप्त्या मका-रेण भूताव्यक्तकारणाऽव्याकृतावरणलयात्मकव्याप्त्या विन्दु-नादाभ्यां तुर्योन्मनात्मिकावस्थाव्याप्त्या ब्रह्मणः शक्तिर्गु-णसाम्यस्वरूपा तया साकं मायिकेन च, सैव कस्मिन्ननेकत्वप्रद-र्शनहेतुः शक्तिर्माया तस्या इदं त्रैगुण्यं मायिकं तेन सहैव सु-

निश्चितोऽयं प्रणवो यत्र शान्तः-घृतकणस्तदप्यघृत इव लयंप्राप्तः। तत्सर्वोपाधिव्यावृत्त्या तच्छब्दप्रतिपाद्यं लक्ष्यम्, नतु शक्तिग्रहेणानिर्देश्यत्वात्, विद्याऽविद्यात्मकनियन्तृनियम्यत्वमीशजीवयोरुपाधिभूतप्रपञ्चः। सविषयप्रणवस्य निर्वाणहिमकणस्य जलमिवेत्यर्थः। "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुने"ति भगवदुक्तेः वेदाः हेयत्वेन त्रैगुण्यविषया भवन्ति। निस्त्रैगुण्यमुपादेयत्वेन निस्त्रैगुण्यो भवेति वेदतुल्यभगवद्वचनात्। "सर्वे वेदा यत्पदमामनन्ती"ति श्रुतेश्च। अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कारस्त्र्यात्मा "आत्मैव संविशत्यात्मनाऽत्मानं य एवं वेद" इति माण्डूक्यश्रुत्या सविषयप्रणवलयोक्तत्वाच्च लयावशिष्टं प्रणवनिर्वाणम्। केवलानन्दबोधं—विदितसाभासरहितं केवलञ्च तद्विषयसुखं तत् साधनसुखभोक्तृत्वादिदुःखात्यन्ताभावादानन्दश्च तदेव, बोधस्वरूपश्च बोधनीयबोधनबोधकभेदराहिताखण्डम्। एवम्भूते ज्ञानप्रलये जाते सति, अथेदानीं शान्तिपृच्छकं पृच्छामि, एतदन्या पराऽतिशयेनोत्कृष्टा का शान्तिरस्तीत्यभिज्ञस्त्वं वदेत्यर्थः। किन्तु एतदतिरिक्तं नास्ति तस्मादियमेवेत्यर्थः ॥ १९ ॥

धर्मं कृत्वा माऽस्तु ते तत्फलेप्सा
त्यक्त्वा त्रित्वं तूर्यधर्मे रमस्व।
भूतेभ्यः कमानन्दं त्वम्भवस्व
मानं त्यक्त्वा स्वस्वसिद्धोऽनपेक्षः ॥२०॥

इदानीं प्रश्नत्रयाणां प्रत्युत्तरमुक्त्वा आरुरुक्षूणामुक्तज्ञानसाधनीभूताचित्तशुद्धिहेतुर्धर्म उच्यते। धर्मं कृत्वेति—धर्मः सर्वधारणहेतुर्न तु नाशदुःखादिहेतुरधर्मो धर्मः, वेदबोधितश्रेयःसाधनत्वरूपः पञ्चमहायज्ञस्वरूपः। "भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो ब्रह्मयज्ञ" इति शातपथीश्रुतेः। अहरहर्भूतेभ्यो बलिं हरेदित्यादि पञ्चचोदनालक्ष्ये-

स्वादि देवयज्ञो धर्मः । एवमेषां यो यो धर्मः स स पञ्चमहायज्ञान्त-तया पञ्चमहायज्ञः, सर्वधर्मभूतोऽयं ब्रह्मादिस्थावरान्तैः स्वाधिकारानुसारेण क्रियते । तिर्यगादिष्वपूर्वोत्पत्त्यभावात् पापक्षयो भवति । कपोताख्याने मनुष्ययज्ञेन स्वर्गप्राप्तिरिति श्रवणात् । तिर्यञ्चोऽपि स्वराजानं पूजयन्तीति च पुत्रादीन्पालयन्ति । शास्त्राधिकाराभावेऽपि स्वभावप्रवृत्तव्यवहारक्षमा भवन्तीति श्रूयते । "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् । "देवान्भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथे"ति भगवदुक्तत्वात् । व्यवसायात्मिकबुध्या निष्कामत्वेन भगवदुद्देशेनाऽनुष्ठानेन देवान्भावयतां चित्तशुद्धिद्वारा ज्ञानेन परमश्रेयो मोक्षो भवति । अव्यवसायिनान्तु दृष्टभोगादीन्भुक्त्वा पुण्यक्षयोभवति । सुष्ठु देवैः सम्यगनुगृहीतस्य स एव धर्मोऽनेन प्रकारेण भवति । स च "विषयवती प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी"ति पातञ्जलसूत्रात् सवितर्कनिर्वितर्कसमाधिभूतयज्ञः । अथवा रुद्रप्रयुक्तयोगे प्रातिलोमेन भूतलयहेतुपञ्चमहाभूतबलिदानेन अहंभूताधियज्ञं यजन्ति । सर्वाङ्गधारणया मनुष्याकृतौ प्रमेयचैतन्याधियज्ञयजनं मनुष्ययज्ञः । सप्तदशसंख्याकलिङ्गशरीरं तत्र मनोबुद्धिप्रधानानि दशेन्द्रियाणि तत्तद्देवतात्मन्यधिदैवसंयमाग्नौ हवनं दैवयज्ञः । "ॐमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्नि"ति भगवदुक्तप्रकारेण गुरूपदिष्टप्रणवार्थं स्मरन् सोऽहं शब्दस्य नादः प्रणवोच्चारणं भ्रुवोर्मध्ये नादान्तरात्मयजनं ब्रह्मयज्ञः । तज्ञा सप्तदशी स्वधा तया सप्तधाऽन्तरात्मानं पितरमधियज्ञं यजतीति पितृयज्ञः । अयमेव पञ्चविधो धर्म्मयज्ञो वर्णाश्रमभेदेन कामनापरत्वेन नानाविधो भूत्वा देवमनुष्यतिर्यगादीन् जीवयेत् । गुणति एवं

स्त्रधर्मयज्ञमधिकृत्य वर्ततेऽसावत्राधियज्ञो विष्णुः "यज्ञो वै विष्णुरि"-ति श्रुतेः। अतएव प्रजानां यद्यदपेक्षितं तत्तद्भवतीत्यर्थः। सर्वस्वधर्मयज्ञानां परमोऽयं धर्मः। एतदनुष्ठानेन कृतकृत्यो भवति। "स ऐक्षत इति" श्रुत्युक्तसृष्ट्यादौ ईक्षणमालोचनं तपःस्वरूपं स्वस्य धर्मः। आवरणविक्षेपरहितात्मनि धारणाध्यानात्मकनिरोधोत्पादनहेतुर्धर्मः अपरोक्षसाक्षात्कारत्वात्। "स एव परमो धर्मो यद्योगेनाऽत्मदर्शनमि"ति याज्ञवल्क्यस्मृतेः। "यस्त्वात्मरति"रिति ज्ञानयज्ञं परमिति भगवदुक्तेः। एतद्धर्मस्तदेतत् क्षेत्रं यज। "तस्माद्धर्मात्परं नास्ती"ति श्रुतेः। निवृत्तिप्रवृत्तिरूपधर्मं कृत्वा तत्फलेप्सा, तस्य धर्मस्य कामनया उपासितस्यावाऽन्तरफलं धर्मार्थकामात्मकम्। निवृत्तरूपस्य त्वणिमादिकं ज्ञानञ्च फलं, तस्येप्सा ते तव माऽस्तु संसारप्रदं तत् क्रोधजनकत्वात्। निर्विषयधर्मानुष्ठानं भूयादित्यर्थः। शिविवत् त्रीन् कामक्रोधलोभशबलधर्माऽभासान् नरकद्वारभूतान् त्यक्त्वा परित्यज्य, तुर्यधर्मे—कामाद्युक्तत्रयरहितनिर्हेतुके तुर्ये चतुर्थे धर्मे रमस्व रतिं कुर्वित्यर्थः। पापक्षयपुण्यातिशयं विनेदमशक्यम्। पापैस्त्याज्यः पुण्यैराश्रयितव्यः कथं भवामीति चेदाह-कर्मणा मनसा गिरा भूतानामद्रोहेण, भूतेभ्यः ब्रह्मादिस्थावरान्तेभ्यः, कं धर्माऽविरुद्धयथाशक्त्या सर्वोपायैः सुखम् कायवाङ्मनाभिर्भगवद्बुद्ध्या सुखदो भवेत्यध्याहार्यम्। मानञ्च महत्त्वं ददातीति मानदः त्वं भवेत्यर्थः। दुःखावसान भेदो मा भवेत्यर्थः। यत्कृतं परेभ्यः तद्भावविफलदातृत्वात्। मानं उक्तानुष्ठानेन भूतेभ्यः प्राप्तसन्मानः, तज्जन्याऽभिमानफलादिना सह तं मानं त्यक्त्वा मानाऽवमानाऽविषयत्वादहं मान्यो नेतीति भगवदुक्तज्ञानलक्षणम्, मानित्वेन मानित्वस्वरूपत्यागेनेत्यर्थः। स्वस्वासिद्धः युष्मत्प्रत्ययगोचरव्यावृत्त्या स्वशब्दलक्षितमीश्वरस्वरूपं तेन स्वस्वरूपेणाऽसिद्धः

आत्मैकत्वसिद्धोऽपरानपेक्षः व्यपेक्षारहितस्त्वम्भवेत्यर्थः। योगारूढ-श्चेति श्लोकसङ्ग्रहार्थम्। आरुरुक्षोर्भवत्येव योगारूढत्वं तस्मात्॥२०॥

कस्याऽपेक्षां मा कुरु त्वं समात्मा
क्षन्तव्यास्ते तर्ज्जना दारुणैताः।
सांख्ये योगे लौकिके सप्रपञ्चे
कृष्णाविष्णुं(?) जिष्णुशर्वं वद त्वम्॥ २१॥

कामाङ्गीकारे क्रोधादिदोषबाहुल्यादनिच्छया यद्भवतु तद्भवत्वित्यपेक्षानिषेधमाह–कस्य सुहृच्छिष्यपुत्रमित्रसहायादिकस्य अपेक्षां सिद्धिनिमित्तं मम साहाय्यं कुर्वितीच्छाऽपेक्षा तां त्वं मा कुर्वित्यर्थः, ममानुग्रहात्। "सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ। ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसी"ति भगवदुक्तत्वात् समात्मा–सम उत्पत्तिस्थितिप्रलयेऽपि अविकृतस्वरुपोऽसौ।"अविनाशि तु तद्विद्धि येन सर्वमिदं ततमि"ति च। व्याप्येन व्यापकस्याऽनिष्टं कर्त्तुमशक्यमात्मैकत्वदर्शनेन। सुषव्याघ्रवत्सुखदुःखादिभोगरहितस्य ते तव भूतैः कृताः तर्ज्जनाः क्षन्तव्याः क्षन्तुं योग्याः। का इति चेत्-दारुणैताः राजसतामसजनकृताः धिक्कायोऽसि दुरात्माऽसि ध्वंसस्व,इतो गच्छ त्वमित्याद्यज्ञदुःखहेतुवाक्शल्यभूताः दारुणाः अज्ञहृदयदारणत्वात्, ता एताः सर्वलोकहृद्दारणत्वेन प्रसिद्धाः शुद्धाः। क्षमोत्तरं किं कर्त्तव्यं मयेति चेत् हरिहरनामोच्चारणस्मरणं कर्त्तव्यमित्याह सांख्ये-चतुर्विंशतितत्त्वसंख्याया उत्पन्नं सांख्यम्। किं तत्–पुरुषः अभोक्ता,अकर्त्ता,सुखदुःखक्रियाणाञ्च समभावनं ज्ञानं, तस्मिन् स्थितः सन् च, योगे क्षिप्तमूढविक्षिप्तचित्तभूमिकान्तैकाग्र्यात्मविषयवृत्त्यस्मितामात्रः सविकल्पसमाधिर्योगः, तस्मिन् स्थितः सन्, परया वाचा नाम वदेदित्यर्थः। लौकिके–लोके भवो लौकिकाचारः, कुलधर्मादिकस्तस्मिंश्च।

पुनः कीदृशे सप्रपञ्चे । "इन्द्रो मायाभिः पुरुरूप ईयते" इतिश्रुतेः। प्रोत्कृष्टदुःखदजगत्कारणमायया परवस्तु पञ्च्यते इति प्रपञ्चस्तेन सह संसारः सुखदुःखानुभवस्तास्मिन्, वैखर्या वाचा सार्थं वदेत्यर्थः। सत्ता तत् किमानन्दप्रतिपादककृष्णनामग्रहणेन कृतधर्माद्यक्षय्यसुखरूपं भवति। "प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते" इति भगवदुक्तेः। तत्सुखसङ्गेन बन्धप्राप्तिरिति चेत्-वेवेष्टीति व्यापकत्वात्तस्यैव नाम विष्णुरिति वदेदित्यर्थः । स एव स्वनाम्ना कामक्रोधादिशत्रून् जेतुं शीलमस्याऽसौ जिष्णुस्तं वद, पराभवाऽभावात् । अविद्याभयमिति चेत्–शर्वं अनाद्यविद्याबन्धयुक्तजीवानां तारकोपदेशेन बन्धं शृणोतीति शर्वं त्वं वदेत्यर्थः । अक्षयपुण्यजयेनाऽभिमाननिवारणार्थमिदम् । ननु विष्णुशिवयोर्नामानि किमर्थमुक्तानि, द्वितीयपरमेश्वरस्याऽभावादेकस्यैव वक्तव्यानीति चेन्न, इयं वैष्णवशैवाऽभासानां विष्णुशिवस्वरूपमविदुषामवैदिकानां वा अत्र न श्रोतव्या ।

तत्र शिव उवाच कृष्णम् ।

अहं त्वं सर्वगो देवस्त्वमेवाऽहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥
त्वद्द्वुषा(?) सा जगन्नाथ सैवाऽस्तु मम गोपते ।
यस्तु त्वां द्विषते देव स मां द्वेष्टि न संशयः ॥
त्वद्विस्तारोऽयं ते देव अहं भूतपतिस्ततः ।
न तद्वस्तु विना देव यत्ते विरहितं क्वचित् ।
नामानि तव गोविन्द यानि लोके महान्ति ते ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥
यदासीद्यच्च वर्त्तते यच्च भावि जगत्पते ।
सर्वं त्वमेव देवेश यच्च किञ्चित्त्वया नहि ॥

इति हरिवंशे कैलासयात्रायां शिवोक्तसार्थनामोच्चारणं, सर्वधर्मेभ्योऽन्तरङ्गोऽधिकतरश्च धर्मोऽयम्। कस्मात्–हिंसादिपुरुषान्तरद्रव्यान्तरदेशकालादिनियमाऽनपेक्षत्वाद्याधिक्यकारणमिति, सहस्रनामभाष्ये आचार्यवचनात्। "ध्यायन् कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवमि"ति विष्णुपुराणे। सर्वपापनिकृन्तनं सद्यश्चित्तशुद्धिकरं नामेत्यजामिलादीनामनुभवोऽस्माकन्तु नेतीति मा वद, सद्यःप्रतीतिविधानेनोच्चारणात्। तत् किंविधानं तदाह–"तृणादपि च नीचेन तरोरपि सहिष्णुना। अमानिना मानदेन कर्त्तव्यं हरिकीर्त्तनम्।" शरीरं विस्मृत्याऽष्टसात्त्विकभावैः प्रेम्णाऽर्थदृष्ट्या कीर्तनं कर्त्तव्यम्। निर्मात्सर्येण सद्यः सिद्धिः। कथम्? कृत्वा पश्य। ननु ब्रह्मादीनामधिकः कः? एते जीवा वा ईश्वरो वेति चेदाह–"कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इत्याथर्वणश्रुतेः। विष्णुपुराणे गुणमूर्त्तित्वमुक्तत्वात् गुणनियन्तृत्वाच्च गुणमयी कारणोपाधिनित्यमुक्तत्वाभ्याञ्च त्रयः परमेश्वराः, न तु जीवाः। "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" "तदात्मानं सृजाम्यहमि"ति च भगवदुक्तेः। रजःसत्त्वतमोमयीं मायामधिष्ठाय ब्रह्मादिविग्रहेण सम्भवत्येकः परमेश्वरः–नित्यमुक्तो निरावरणः सर्वज्ञाऽत्मज्ञानविग्रहः शुद्धज्ञानस्वरूपो निर्गुणोऽपि सगुणः, निरतिशयाऽत्मज्ञाननित्यगुणत्वात्परमेश्वरः। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती"ति श्रुत्युक्तलक्षणत्रयमात्मज्ञानविग्रहे परमेश्वरे। तस्याऽवताराास्त्रिमूर्त्तिषु निरतिशयत्रिलक्षणसृष्ट्यादिकृत्यात्मकं श्रुतत्वात् त्रिमूर्त्यात्मकसाकारोऽयं परमेश्वरः, ब्रह्मादिकाऽत्रिसंवादे निर्णीतत्वात्। पुराणादिष्वाधिक्यमेकैकस्य दृश्यत इति। यदाह–"रजस्तमश्चाभिभूय सत्त्वं भवति भारत। रजः सत्त्वं तमश्चैव तमः

सत्त्वं रजस्तथे''ति भगवद्वचनात् । यदा रजः प्रधानेन ब्रह्माण्डोत्पत्तिस्तदा ब्रह्मणो विष्णुरुद्रोत्पत्तिः । सत्त्वप्रधानेन यदा तदा विष्णोः ब्रह्मरुद्रोत्पत्तिः। तमःप्रधानेन रुद्राद्ब्रह्मविष्णुदेहोत्पत्तिः। तत्तदभिप्रायदृष्ट्या तत्तत्पुराणानि व्यासः करोति । स्वस्वप्रकृतेर्निवृत्तिप्रवृत्तिनिरातिशयकृतित्वगुणाधीनत्वशून्यत्वाच्च परमेश्वरः कार्योपाधिस्थजीवानां सृष्ट्यादिकृत्यभावात् । ब्रह्मा विष्णुः रुद्र ईश्वरः सदाशिव उत्तरोत्तरमधिक इति शैवाः । अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवनारायणेति वैष्णवाः । यथा शालग्रामे विष्णोरुपासना । तथा-पञ्चभूतगतसमष्टिजीवे न्यूनाधिक्यजीववैषम्यभेदेन परमेश्वरोपासना। न तु कारणोपाधिमूर्त्तिवत्त्वनिर्णयः। मोक्षधर्मे कृतान्तसांख्ये गुणसाम्ये त्रयाणां समत्वं, क्षोभे तु परस्परं नियन्तृनियम्यगुरुशिष्यत्वादिलीलाकौतुकं लोकशिक्षार्थम्। "तस्याऽऽत्मानुग्रहाऽभावेऽपि भूतानुग्रहः प्रयोजन''मिति पातञ्जलसूत्रात् कृते ईश्वरविग्रहभेदेऽपि कारणोपाधिव्यवहारतो न तत्र वैषम्यमिति। परमशैववैष्णवपरं भावविद्धमिदम्। तस्मादद्वितीयः परमेश्वरः, साकारोऽपि समष्टिजीवसङ्कल्पान्मूर्त्तिशून्यमूर्त्तित्वं, न तु कर्मजम्। "अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः। परं भावमजानन्तो मम भूतमहेश्वरमि''ति भगवदुक्तेः । एवं विदां मूर्त्युपासकानां ब्रह्मैव प्राप्तिः न तु प्रकृतिः॥२१॥शिवविष्णुमेकं मात्सर्येण भजनप्रकारमाह-

सर्वैः स्वैस्तैर्देहगेहेन चाऽर्थै-
र्वन्दस्व त्वं रुक्मिणीशं परेशम् ।
द्रोहं लोभं मुञ्च दम्भमसूयां
दुर्बुद्धे त्वं स्वस्वरूपञ्च भजेदम् ॥ २२ ॥

सर्वैः-परमेश्वरोपदेशसमये कम्पस्वेदरोमाञ्चस्वरभङ्गवेपथुवैवर्ण्याश्रुप्रलया इति सात्विकाऽष्टभावा गुरूपदिष्टपरमेश्वरे वेद्यस्वरूपं

शक्तिर्वा जायन्ते । तैः खैः तद्भावविशिष्टैः दशेन्द्रियैः तत्तद्देवताभिः सच्चिदानन्दमात्रब्रह्मणि लयात्मकभजनेन निर्गुणपरमात्मस्वरूपं भज । तदाऽनुभवेन ज्ञानभजनेन सविकल्पदशायां "यतो वा इमानि भूतानि जायन्ते" इत्यादि जगत्कर्त्ता भर्त्ता हर्त्ता इति तटस्थलक्षणलक्षितनित्यमुक्तत्वादिगुणैः सगुणं परमात्मानं भज । स एव प्रकृतिगुणावच्छिन्नदृष्टीनामार्त्तजिज्ञास्वर्थार्थिनां कृपया गुणमयीं प्रकृतिं तामवष्टभ्य ऐन्द्रजालिक इव गुणमयीं ब्रह्मविष्णुमहेश्वररामकृष्णदत्तादिविग्रहैः अमृतपुत्तलिकेव । ब्रह्म साकारमिव साकारस्वरूपं सगुणं ।निर्गुणं साकारं सर्वश्रेयस्करमिन्द्रियगोचरज्ञानप्रेमवन्दनेन वन्दस्व,अष्टधाऽष्टाङ्गसङ्कोचनेनेत्यर्थः । द्रोहः पराऽनिष्टचिन्तनम् । परदारापरद्रव्याभिलाषो लोभस्तम् , धर्मध्वजित्वं दम्भः तन्तु इत्यपरम् । असूया परोत्कर्षाऽसहनता तां मुञ्च । अश्रेयस्कारत्वात् हे दुर्बुद्धे ? सभावेन काथवेत्तेति परिहासार्थमुक्तशब्देन येन दुष्टा बुद्धिर्यस्या ऽसौ इदानीं द्रोहादिकं त्यक्त्वा तद्विषयज्ञानज्ञातृत्वमवज्ञाय ज्ञातुः स्वरूपं स्वच्छ तद्रूपमनुत्तमामिदं भज, मधुरताऽमृतमिवेत्यर्थः ॥ २२ ॥

निःसङ्गस्त्वं सङ्गमात्सज्जनानां
निष्कामस्त्वं सेवया निःस्पृहाणाम् ।
गाङ्गं पीत्वा सोमपस्त्वं भवस्व
शुद्धो भूत्वा शुद्धस्त्वं तद्भजस्व ॥२३॥

श्लोकेऽस्मिन्निष्कामः निःस्पृहः । सोमकपानफलसाधनमाह— निःसङ्ग इति। त्वदुक्तसाधनं कर्त्तुमशक्यमिति चेत् शृणु । निःसङ्गः निर्गतसङ्गो भव । कस्मादिति चेत्सङ्गमात्—अतिनिर्विकल्पभावेन त्यक्तमानेन प्रेम्णा च कृतः समीचीनः सत्सङ्गस्तस्मात् । केषामिति चेत्—नास्तिक्यासन्ताभावहेतुकनिर्वासनया सन्मात्राकार-

प्रत्यक्सद्वृत्तिकाः जनाः सज्जनास्तेषाम् । परोपकारार्थकामोऽपि माऽस्त्वित्याह—धूममार्गस्य कर्मजन्येहाऽमुत्र फलभोगवासनासङ्गनिर्गतेऽपि, अक्षय्यमणिमा वैश्वर्यं समीचीनमिति । वासनासङ्गोद्भवकामे किं साधनमिति चेत्; सेवया—अत्यादरेण श्रवणकीर्तनस्मरणपादसेवनाऽर्चनवन्दनदास्यसख्याऽऽत्मनिवेदनात्मिका भजनस्वरूपा तया। केषां—ब्रह्मविष्णुमहेश्वरसनकादिव्यासशुकशङ्करसदानन्दादिगुरूणां प्राप्तैश्वर्यैर्जिताणिमाद्यैरैश्वर्ये स्पृहा येषां तेषां, परोक्षसेवया निर्गता विषयेच्छा कामाभाव इत्यर्थः, पूर्णकामत्वात् । कामो दुष्पूरः तुच्छशत्रुः मोक्षविरोधीति ज्ञानाच्च मीमांसकानामाग्रहो द्विजानां सोमपानमावश्यकमितिचेत्—गाङ्गंगङ्गोद्भवं जलं यथेष्टं पिबेति । सद्द्रव्यश्चेत् गौर्वाक् श्रुतिस्रुपाः तत्संस्कृतं जलं सोमो गाङ्गं तत्, पीनयोगी चेत्—सप्तदशी सोमकला जलं गाङ्गमूर्द्धलम्बिकया पिबेत्यर्थः । पीत्वा तज्जन्यचित्तशुद्ध्या गुरोः सकाशात् श्रुतज्ञानेन । शुद्धखं-शुद्धं गुणवर्जितमनिर्देश्यं खमिव व्यक्ताव्यक्तव्यापकं वासुदेवस्वरूपं भज । भजनकृतित्यागेन तद्रूपत्वेन ज्ञानभजनेत्यर्थः। तद्वासुदेवस्वरूपं भज । "अक्षरं ब्रह्म परमि"ति भगवदुक्तेः ॥ २३ ॥

नत्वा साधून्योगिनो देवसिद्धा-
न्सवर्षीस्तानर्यमादीन्गुरून् भो ।
विश्वाधारं रुक्मिणीशं शिवेशं
नत्वा ज्ञातः काथबोधः समाप्तः ॥ २४ ॥

श्लोकेऽस्मिन्—ग्रन्थान्ते मङ्गलमाचरति । साधून् धर्मशीलान् योगिनः समाधिमतः देवसिद्धान् । एकादशरुद्राः द्वादशादित्याः अष्टौ वसवः द्वावश्विनौ च, एवं त्रयस्त्रिंशद्देवाश्च ते सिद्धाश्च अणिमाद्यैश्वर्यवन्तश्च तान् । सर्वर्षीन्—नारदादिदेवर्षयो भृग्वादि-

महर्षयो वसिष्ठादिमहर्षयो ब्रह्मपुत्रादयश्चान्ये सर्वर्षयः मन्त्रद्रष्टारस्तान्। अर्यमादीन्-अर्यमाऽदिर्येषां ते सप्तपितृगणास्तान् । गुरून् ब्रह्मविष्णुशिवदत्तकपिलादयश्च सदाशिवदत्तसदानन्दादिहरिपादान्ताः मे मम गुरव स्तान्,नारायणब्रह्मवसिष्ठशक्तिपराशरव्यासशुकगौडगोविन्दशङ्कराचार्यादींश्च नत्वा। विश्वस्य जगत आधारमाश्रयभूतं परब्रह्म स्वशक्त्या द्विधा जातं, घृतकणाद्घृतमिव जातमिवेत्यर्थः । तत्किं रुक्मिणीशं शिवेशञ्च । सत्तानिवृत्त्यैक्यस्वरूपमात्रकृष्णस्य स्वप्रकाशरुचिर्दीप्तिः रुक्मिणी तस्याः स्वात्मत्वेनेशस्तम् । मङ्गलशिवस्याऽत्यन्तमङ्गलता शिवा तस्याः स्वात्मत्वेनेशस्तञ्च तौ नत्वा । काथबोधः—कश्च थश्च कथौ ईशजीवौ, तयोः स्वरूपकीर्तिः कथा, कथायास्तात्पर्यभूतोऽर्थः—काथः परंब्रह्म, तस्य बोधः बोधनहेतुरसौ समाप्तः, मुमुक्षुभिः सम्यगाप्त इत्यर्थः । ब्रह्मादीनां वारद्वयं नमस्कारः पुनरुक्तिश्चेन्न देवत्वगुरुत्वाभ्यां नैव दोषः । एतेषां नमनफलं किमिति चेत्—स्वधर्मयोगलिङ्गकर्मवेदमन्त्रशुद्धिसफलवृद्धिपुष्टितुष्टिब्रह्मचर्यज्ञानसर्वयज्ञज्ञानयोगफलानाञ्च वृद्धिः सम्यग्ज्ञानपूर्वकनमनेनेत्यर्थः ॥ २४ ॥

श्रुत्वा त्वेनं शान्तरूपा बभूव
सद्ग्रन्थनं काथकं मुक्तिमार्गे ।
योगीन्द्राणां सद्रहस्यञ्च गुह्यं
सन्तोषान्तर्व्यापकेनैव गीतम् ॥ २५ ॥

ग्रन्थमिति । श्रुत्वा शिष्यस्य किं जातमिति चेत्—श्रुत्वेति एकाग्रार्थबुद्ध्या, न तु क्षिप्तसंमूढविक्षिप्ततया । तु निश्चयेन विपरीतं श्रुतञ्चेत् पुण्यादिकं भवति अतएव एनं प्रसिद्धं सन्तोषानन्दवद्भगवदुक्तं—सद्ग्रन्थं—सन्मात्रप्रतिपादकपदानि ग्रथितानि यस्मिंस्तम् । सद्ज्ञानविषये श्रवणमनननिदिध्यासनरूप मुक्तिमार्गे

सूर्य इव काशकम्। अज्ञानाऽवरणाऽत्यन्तप्रतियोगी ज्ञानभास्करत्वात्। योगीन्द्राणां चित्तवृत्तिनिरोधधर्मिणां शुद्धतत्पदार्थबोधकत्वेन तेषां सद्रहस्यं-सद्विषये रहस्यमैकान्तिकत्वात्, इसपरं गुह्यं गोपनीयम्। कथश्चेत् सन्तोषान्तव्यापकेन समीचीनत्वम्। निर्विषये चित्तत्वं तद्गतः तोषः सन्तोषः, तस्याप्यन्तरं व्याप्तं येनाऽसौ निरावरणः सर्वज्ञो दत्तात्रेयस्तेन गीतं-शिष्यस्य सन्तोशस्य खेदनिर्मूलनार्थं गानं कृतम्। सद्ग्रन्थं श्रुत्वा शिष्यः शान्तरूपोः ब्रह्मसमन्वितः बभूवेत्यर्थः ॥ २५ ॥

अनादिनिधनो देवः सर्वव्यापी निरञ्जनः।
हृदयस्थः स्वयं वक्ता कर्त्ता कारयिता हरिः ॥२६॥

कोऽसौ दत्तश्चेदाह-अनादिनिधन इति। अनादिनिधनः-न विद्यते आदिर्यस्याऽसौ, अनादिश्च सर्वकारणत्वात्, प्रलये जगन्निधीयते यस्मिन्निति निधनश्चासौ देवः स्वप्रकाशः द्योतनत्वात्। सर्वव्यापी-सर्वं यत्किञ्चिदविशेषं शुक्त्या शुक्तिरजतमिवेदं व्याप्तं येनाऽसौ। व्याप्यः स्थितोऽपि। संसारानुभवकारणमज्ञानाञ्जनं निर्गतं यस्मान्नानुभूतं कदाप्यनेनाऽसौ निरञ्जनः हृदयस्थः-परिमाणशून्योऽपि धीप्रेरकत्वेनाऽङ्गुष्ठमात्रावकाशे हृदि प्रतीयमानत्वात् हृदिस्थः। अशरीरोऽपि वक्ता विद्याऽरोपितवक्तृत्वात्। कर्त्तृत्वाच्च कर्त्ता। अयस्कान्तः लोहचालनकृतिमानिव कारयिता यथा सत्कर्माणि सूर्यः। तथा हरिः स्मर्त्तॄणां पापं हरतीत्यसौ हरिः, "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृत" इति स्मृत्युक्तत्वात्। स्वयमकर्त्ताऽपि मायाशक्तिनिमित्तं कर्त्तृत्वं व्यावहारिकम्। परमार्थतः कर्त्ताऽकर्त्तेति वक्तुमशक्यः। जगत्कृतिः जडे प्रधानेऽसम्भवादीक्षणलिङ्गाच्च किञ्चिज्ज्ञत्वाज्जीवेऽप्यसम्भवात्। स्वकर्त्तृत्वाभिमाननिवारणार्था श्रुतिबोधितभावनेयं मौनेन भजनमित्यर्थः ॥ २६ ॥

प्रथमश्लोके-गुणाऽगुणस्वरूपं स्तुत्वा जपश्रवणाभ्यां सुखी भवेत् ॥१॥ द्वितीये-हंसमन्त्रसद्गुरुनाम्नो निरुक्तज्ञानात्सर्वमन्त्रजपाधिकारित्वम् ॥२॥ श्लोकद्वयेनेशं गुरुञ्च स्तुत्वा तृतीयचतुर्थाभ्यां शिष्यस्य प्रश्नत्रयम् ॥३-४॥ पञ्चमे-काथशब्दमहावाक्यार्थव्याख्यानेन वेद्यफलम् ॥५॥ षष्ठे-काथयोः कायी काय इति संज्ञयोक्तेः आरोग्यम् ॥६॥ सप्तमे-महावाक्यविचारेण लक्ष्यैक्यबोधात्सद्यो मोक्षः ॥७॥ अष्टमे-लोकाऽलोकशीतोष्णलयबोधे शीतोष्णादितोऽप्रतिबन्धः सद्भाविकगुर्वनुगृहीतस्य ॥ ८ ॥ नवमे-पञ्चविंशचतुर्विंशकूटस्थाऽव्यक्तबोधे तत्त्वबोधेनोपाधिद्वयं निरस्य षड्विंशैक्यबोधेन विक्षेपशमः ॥ ९ ॥ दशमे-त्रिपुटीं निरस्य सत्संविस्या योगानुभवाद्योगपुष्टिः ॥१०॥ एकादशे-सकार्याऽज्ञानाहम्भावनिरासाज्ज्ञानम् ॥११॥ द्वादशे-व्यक्तदृश्यत्वादर्शनमात्रबोधात् क्रियासाफल्यमनास्तिक्यञ्च ॥१२॥ त्रयोदशे-बाह्यान्तरप्रमेयप्रमाणप्रमातृत्वचित्सद्वृत्तिकाथवेत्तृत्वविरहादद्वयतावाप्तिः जपश्रवणात् ज्ञानाभिमानानिर्वृत्तिश्च।१३।चतुर्दशे-सङ्गेऽप्यसङ्गफलम्॥१४॥पञ्चदशे-मायाजयः झटिति पल्लवेन सह जपेन ॥१५॥ षोडशे-सद्बोधार्थं वाक्यप्रवृत्तिरिति मौनफलम् ॥ १६ ॥ सप्तदशे विपर्ययाऽपवादक्षयार्थं सन्मात्रं चिन्मात्रमिदमिति भावनाया निर्बाधता ॥ १७ ॥ अष्टादशे-सर्वातीतब्रह्मणः "त्र्यक्षरो मौनेन वाचक" इति तत्त्वज्ञानात् वेदादिसर्वजपफलम् ॥ १८ ॥ एकोनविंशे-प्रणवाऽवयवत्रैगुण्यनिरासात् निर्वाणप्रत्ययबोधे शान्तिः ॥ १९ ॥ विंशतितमे-धर्मप्रतिपादनाद्धर्मफलम् ॥२०॥ एकविंशे-निरपेक्षक्षमावतां सर्वत्र भगवन्नामानुवादस्मरणप्रेम्णाऽनन्तफलं सर्वप्रायश्चित्तञ्च ॥ २१ ॥ द्वाविंशे-द्रोहादिनिवाकभक्तिश्रयणात् सर्वेन्द्रियनिष्पापत्वम् ॥ २२ ॥ त्रयोविंशे-निः

सङ्गत्वनिष्कामत्वाऽऽत्मशुद्धित्वानां सुसाधनमुक्तम्। अतिशुचित्वं शिष्टत्वञ्चाऽर्थानुष्ठानात् श्रवणजपाभ्यामपराधक्षयश्च ॥ २३ ॥ चतुर्विंशे–ऋणत्रयमोचनं सर्वकामाऽवाप्तिः । "भूतिकामो ब्रह्मनिष्ठमुपासीते"ति श्रुतेः । अनन्यभावप्रेम्णा श्लोकोक्तानामुपासकानां नमस्काराच्च भूतिः ॥२४॥ पञ्चविंशे–मुक्तौ प्रतिबन्धनाशः रहस्यश्रवणफलञ्च॥२५॥ षड्विंशे–पापनिर्लेपता निरतिशयसर्वपुरुषार्थफलान्यनन्तान्यन्ते हरिस्मृतिश्च कृतिकारयितृताविशिष्टहरिप्रेम्णा स्मरणात् ॥ षड्विंशे शतवारं वै मूलं तुलसीसन्निधौ । जप्त्वा श्रुत्वा शुचिर्मौनी सर्वान्कामानवाप्नुयात् ॥१॥ लक्षत्रयं परिक्रम्य ग्रन्थं तुलसिसंयुतम् । पुण्याहवाचनं कृत्वा वन्ध्या पुत्रवती भवेत् ॥२॥ धर्मं कृत्वेति यथार्थं वागर्थानतिरञ्जयेत् । धर्मवृद्धिर्भवेत्तस्य नाऽत्र कार्या विचारणा ॥३॥ सांवादिसाय स्वाहेति प्रतिश्लोकं जपेन्नरः । व्याधिमुक्तो भवेत्सद्यो जप्त्वा पूर्वविधानतः ॥ ४ ॥ देहगेहेन चार्थांश्च जप्त्वाऽर्थान्प्राप्नुयात्सुधीः । भूतिकामश्च भूतिश्च ग्रन्थोपासनयाऽप्नुयात् ॥ ५ ॥ जपान्ते भोजयेद्विप्रान्सुवासांसि च शक्तितः । सन्तोषाऽन्तः सशिष्यस्य लक्ष्मीस्तु सा बुधस्य च ॥ ६ ॥ स सूर्यः साजनीकस्य सर्वज्ञपरमात्मनः । दत्तात्रेयस्य वै नाम्ना कुर्याद्ब्राह्मणतर्पणम् ॥७॥ पूर्णे कामे यथा शक्त्या भक्त्या विप्रांश्च तर्पयेत् । द्रव्याऽभावे सेवया वा यतीन्विप्रांश्च तोषयेत् ॥८॥ तस्य स्वप्नो भवेद्रात्रौ प्रतिबन्धश्च वक्ष्यति । अन्यथा कार्य सिद्धिश्च वित्तशाठ्यं विवर्जयेत् ॥ १० ॥ काऽहं मन्दमतिर्बाला काऽसावीशात्मबोधकः । तद्विवेककृतिः सा मे जात्यन्धस्यैव दिव्यदृक् ॥ ११ ॥ करुणेयं दयार्द्रेण दीनार्तिहरणेन वै । कर्ष्णिना पूजितेनैव सांवादिसेन वै कृता ॥१२॥ सन्तोषाऽनन्दरूपेण गुरुणा

भगिनीमिव । पालयाम्यहमेव त्वां माभैषीःस्त्विति वादना ॥१३॥ साजनी करुणापात्रं सज्जनास्त्वेवं वदन्तु । तेषां कृपाकटाक्षेण पुण्या भवतु साजनी ॥ १४ ॥ इति वासनया जातः काथबोधविवेककः । क्षम्यन्तां सज्जना मह्यं शरण्या दीनवत्सलाः ॥१५॥ भारद्वाजकुलोत्पन्नसाजनीकृतिकेन हि । काथबोधविवेकेन प्रीयतां चित्स्वरूप्यसौ ॥ १६ ॥ सृष्ट्वा पालयतीत्यस्मात्यतिर्ब्रह्मैव नान्यथा । स्त्रीणां धर्मश्च तद्ध्यानं तेन तुष्यतु भास्करः ॥ १७ ॥

इति श्रीदत्तात्रेयकारितश्रीमत्परमहंसपरिव्राजकहरिपादानन्दशिष्यसन्तोषानन्दकृतकाथबोधस्य साजनीकृतव्याख्यारूपकाथबोधविवेकः समाप्तः ॥